

# CHANDAMAMA

PRESENTS

## "BE A DREAM CHILD" CONTEST

The President of India, Dr. A.P.J.Abdul Kalam, in the course of his interaction with children, has been exhorting them to DREAM for the future of India and its people. Recently, at the end of his address to the nation on January 25, he administered an oath to a group of children. For the sake of our young readers, the 10-point oath is reproduced below.

1. I will pursue my education or work with dedication and I will excel in it.
2. I will teach at least 10 illiterate persons to read and write.
3. I will plant at least 10 saplings and shall ensure their growth through constant care.
4. I will visit rural and urban areas, and permanently wean away at least five persons from addiction and gambling.
5. I will constantly endeavour to remove the pain of my suffering brethren.
6. I will not support any religious, caste or language differentiation.
7. I will be honest and will endeavour to make a corruption free society.
8. I will work for becoming an enlightened citizen, and make my family righteous.
9. I will always be a friend of the mentally and physically challenged and will work hard to make them feel normal, like the rest of us.
10. I will proudly celebrate the success of my country and my people.

Chandamama invites the children of India to write one para each about what they have achieved in fulfilling the ten points by the next Independence Day. The contest is open to children between 8 and 15.

**ENTER THE CONTEST AND WIN ATTRACTIVE PRIZES!**

**THREE BEST ENTRIES WILL BE PUBLISHED IN OUR NOVEMBER 2004 ISSUE.**

**LOSING DATE : ugust 31 2004**

Watch for instructions and details of prizes in the May 2004 issue

# यशःकायः स जीवति

आन्ध्रप्रदेशे कडपाजनपदे पोट्टिपाडुनामके सर्वथा अप्रसिद्धे ग्रामे द्विनवति(९२)-वर्षेभ्यः पूर्वं कश्चन बालकः जन्म प्राप्तवान् । तत्रत्या शाला रामायण-महाभारत-भागवतादिमात्रं बोधयति स्म । शुद्धं श्रेष्ठं च जीवनं कथं यापनीयम् इति तत्रत्यः आचार्यः बोधयति स्म । तत्र ये अधीतवन्तः ते पुराणादिषु प्राचीनेषु ग्रन्थेषु निरूपितानां चिरन्तनसत्योपेतानां श्लोकानां कण्ठस्थी-करणे प्रवृत्ताः भवन्ति स्म ।

पूर्वोक्तः बालः नागिरेड्डि-नामकः । सः स्वस्य अग्रिमाध्ययनाय मद्रास्नगरं (चेन्नै इति अधुनातनं नाम) गतवान् । तत्र कानिचन वर्षाणि अध्ययनं कृतवान् च । अध्ययनसमाप्तितः पूर्वम् एव सः कुलोद्योगभूते निर्यातवाणिज्ये उद्युक्तः जातः ।



श्री बि. नागिरेड्डि
२ डिसेम्बर् १९१२ -
२५ फेब्रवरी २००४

तारुण्ये सः स्वातन्त्र्य-सङ्ग्रामे भागम् अवहत् । खादी-आन्दोलने अपि तेन भागः गृहीतः । वस्तुतः तु तेन कुलवाणिज्यस्य निर्वाहाय बर्मादिशे स्थातव्यम् आसीत् ।

द्वितीयस्य जागतिकयुद्धस्य कारणतः तदीयं कुलवाणिज्यं महाहानिग्रस्तं जातम् । तस्मात् तेन अपरस्मिन् क्षेत्रे प्रवृत्तिः दर्शनीया अभवत् । अतः सः प्रकाशनक्षेत्रे हस्तं प्रसारयन् मुद्रणालयम् आरब्धवान् । तेन 'आन्ध्रज्योति'नामिकायाः सामाजिक-राजनैतिकपत्रिकायाः सञ्चालनम् आरब्धम् । तेनैव सह चलनचित्रनिर्माणम् अपि आरब्धम् । तदवसरे 'चक्रपाणि'वर्यस्य सख्यं प्राप्तं तेन । ताभ्यां चिन्तितं - बालानां कृते काचित् पत्रिका आरम्भणीया इति । ततः तौ स्वातन्त्र्यप्राप्तिदिनस्य मासात् पूर्वं *चन्दमामाम्* आरब्धवन्तौ ।

चिकित्साक्षेत्रे अपि तेन कार्यं कृतम् । मद्रास्नगरे तेन तेन चिकित्सालयद्वयम् आरब्धम् । कठिनः परिश्रमः, सरलता, मानवीयता इत्येते तस्य गुणाः आसन् । समग्रे जीवने सः यद्यत् कृतवान्, यद्यत् उक्तवान्, तत्सर्वं प्राचीनसाहित्योक्तेन तत्त्वेन युक्तं भवति स्म एव ।

बि. नागिरेड्डिवर्येण मुद्रण-प्रकाशनसम्बद्धाः, चलनचित्र-सम्बद्धाः च बहवः प्रशस्तयः अपि प्राप्ताः । आन्ध्रप्रदेशस्य विश्व-विद्यालयाभ्याम् उभाभ्यां तस्मै विद्या-वाचस्पत्युपाधिः (डि. लिट्) दत्तः ।

तदीयस्य स्वप्नस्य साकाररूपा *चन्दमामा* कथाद्वारा बालान् जीवनमौल्यानि बोधयन्ती संस्थापकस्य तस्य आशापूरणं निश्चयेन अनुवर्तयिष्यति ।



# एतस्य अङ्कस्य विशेषाः



भल्लूकमान्त्रिकः

१३



योधानां शिल्पम्
(वेतालकथा)

१९



वक्रः पिशाचः

२४



विष्णुपुराणम् - ४

४५

# अन्तरङ्गम्



**ग्राहकशुल्कम् -**
अमेरिका-केनडादेशयोः कृते
प्रतिकृतिमूल्यम् - $२
वार्षिकं शुल्कं - $२०
भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -
**Subscription Division**
**CHANDAMAMA INDIA LIMITED**
No. 82, Defence Officers Colony,
Ekkatuthangal,
CHENNAI - 600 097
E.mail : subscription@chandamama.org

## शुल्कविवरणम्

वायुयानेन भारतेतरदेशान् प्रति
**वार्षिकं (१२ सञ्चिकाः) - रू.९००/-**
**भारते रू. १२०/- (बुक्पोस्ट् द्वारा)**
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited' नाम्ना प्रेषणीयम् ।



संस्थापकौ –
**चक्रपाणिः नागिरेड्डी च**

# श्रोतव्याः शिलाभिः कथ्यमानाः गाथाः

राष्ट्रपतिः डा. अब्दुल्कलामः अभिप्रैति यत् २०२० तमवर्षाभ्यन्तरे भारतं प्रबलः देशः भविष्यति इति । अद्य ये बाल्यावस्थायां सन्ति ते तदभ्यन्तरे युवावस्थाम् आपन्नाः भविष्यन्ति । राष्ट्रपतिः एतस्मिन् वर्धमाने युवसमूहे विश्वसिति यत् एषः देशं प्रगतिपथे नेष्यति इति । यदा यदा अवसरः प्राप्यते तदा सः तान् बोधयति – 'स्वप्नान् पश्यन्तु' इति । ते तस्य स्वप्नस्य साकारतायै प्रयासं विधास्यन्ति एव इत्यत्र पूर्णः विश्वासः अस्ति तस्य ।

अतः एव सः स्वातन्त्र्यदिनोत्सवावसरे शतशः छात्रान् प्रेरितवान् – 'मम देशस्य देश-बान्धवानां च यशस्वितायाः ख्यापने अहं गर्वम् अनुभवामि इति सशपथं वदन्तु' इति । सोऽयं विषयः अग्रिमेषु पञ्चदशसु वर्षेषु लक्षाधिकेषु कोट्यधिकेषु वा बालानां हृदयेषु प्रतिध्वनितः भविष्यति इत्यत्र नास्ति सन्देहः ।

राष्ट्रपतिः स्वस्य कथनावसरे 'यशस्वितायाः ख्यापनम्' इति पदं प्रयुक्तवान् । ख्यापनं च सिद्धिम् अवलम्बते । 'सिद्धिः' अस्ति चेदेव खलु 'ख्यापनं' सम्भवति ? अस्माकं देशस्य सिद्धयः परम्पराधाराम् अवलम्बन्ते । 'भूतं भविष्यतः आधारः' इति लोकोक्तिः एव अस्ति लोके । भारतस्य स्थलानि प्राचीनावशेषाश्च अत्रत्यां पुरातनीं वैभवगाथां श्रावयन्ति । स्थलानि द्रष्टॄणां मनसि परम्परायाः श्रेष्ठताम् उत्किरन्ति ।

विरामदिनानि उपस्थितानि इव । एतेषाम् उत्तमः उपयोगः नाम एतादृशानाम् ऐतिहासिकस्थलानां सन्दर्शनम् एव । तस्मात् वयं देशस्य अभिमानावहम् इतिहासम् अवगन्तुं शक्नुमः । अस्माकं ज्ञानसीमां विस्तारयितुं तादृशानि स्थानानि कक्ष्या-प्रकोष्ठायन्ते । अत्रत्या एकैका अपि शिला इतिहासस्य गाथां श्रावयति । अयि बालाः ! सा गाथा श्रोतव्या खलु अस्माभिः तादृशानां स्थलानां दर्शनपुरस्सरम् ?

सम्पादकः – **विश्वम्**







# जलस्य प्रभावः

कस्मिंश्चित् ग्रामे मङ्गलनामकः कश्चन आसीत् । सः तरणे महाकुशलः । कश्चन भूस्वामी तस्य तरणकौशलं दृष्ट्वा सन्तुष्टः सन् तस्मै काञ्चन कांस्यमूर्तिम् उपायनरूपेण दत्तवान् । परदेशात् आगता सा मूर्तिः बहुमूल्या आसीत् ।

कदाचित् मङ्गलः वसन्तोत्सवं द्रष्टुं राजधानीं प्रति गन्तुम् उद्युक्तः । गमनात् पूर्वं तां बहुमूल्यां मूर्तिं गृहे स्थापयितुं सः न ऐच्छत् । अतः सः मूलचन्दनामकं वणिजं प्रार्थितवान् यत् मम आगमनपर्यन्तम् एतां मूर्तिं रक्षतु इति ।

'एतादृशी सुन्दरी मूर्तिः मादृशानां धनिकानां गृहे एव शोभते, न तु दरिद्रस्य मङ्गलस्य गृहे' इति विचिन्त्य सः वणिक् मङ्गलम् उक्तवान् - ''एतां मूर्तिम् अहमेव क्रेष्यामि । एतस्य मूल्यं किम् इति वदतु'' इति ।

''स्वामिन् ! एषा विक्रयणार्हा न । मम कलायाः चिह्नरूपा एषा'' इति मङ्गलः अवदत् ।

तस्य उत्तरं श्रुत्वा सः वणिक् मनसि एव 'कियद् धार्ष्ट्यम् अस्य' इति वदन् तदा एव निश्चयमपि कृतवान् यत् एषा मूर्तिः मङ्गलाय न प्रत्यर्पणीया इति ।

ततः सः मृदा तादृशीमेव मूर्तिं निर्माप्य पीतवर्णेन लेपयित्वा मङ्गलस्य आगमनस्य अनन्तरं तस्मै दत्तवान् ।

गृहं प्रति गमनानन्तरं मङ्गलेन ज्ञातं यत् अहं वञ्चितः इति । यतः तस्याः मूर्तेः स्थापनसमये कांस्यस्य ध्वनिः न श्रुतः तेन । मूर्तेः घर्षणेन मृदपि पतिता ।

तत्क्षणे एव सः वणिजः मूलचन्दस्य गृहम् आगत्य - ''स्वामिन् ! मम मूलमूर्तिं गोपयित्वा मृदः मूर्तिं दत्तवान् अस्ति भवान् । मम मूर्तिं मह्यं प्रत्यर्पयतु कृपया'' इति उक्तवान् ।

''मङ्गल ! भवता या मूर्तिः दत्ता सा एव मया प्रत्यर्पिता । मया कूपस्य जलेन सा क्षालिता आसीत् । तस्मात् सा कांस्यमूर्तिः मृन्मयी अभवत् इति मन्ये । एतत् सर्वं जलस्य प्रभावतः सम्पन्नम् । मया किं कर्तुं

२५ वर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा

शक्येत ?'' इति उक्तवान् मूलचन्दः ।

मङ्गलः निरुपायः सन् गृहं प्रत्यागतः । सः निश्चितवान् यत् वणिक् योग्यं पाठं बोधनीयः इति ।

कदाचित् मूलचन्दवणिजः पत्नी कांस्य-कलशेन कूपात् जलं स्वीकुर्वती आसीत् । तदा रज्जुः खण्डिता जाता । कांस्यकलशः कूपे पतितः । कूपः बहुगभीरः आसीत् । समग्रे ग्रामे एषः एकः एव पानजलकूपः आसीत् । तादृशं कूपम् अवतीर्य कलशम् आनेतुं मङ्गलः एकः एव समर्थः आसीत् । अतः वणिक् मङ्गलम् आहूय सूचितवान् यत् कलशं निष्कासयतु इति ।

''स्वामिन् ! एतत् बहुसुलभं कार्यम् । श्वः प्रातः भवतः कांस्यकलशं कूपात् बहिः आनेष्यामि । चिन्ता मास्तु'' इति उक्तवान् मङ्गलः ।

तद्दिने मध्यरात्रे मङ्गलः मृदः कञ्चन घटं स्वीकृत्य तं कूपं प्रति आगतः । कूपम् अवतीर्य ततः कांस्यकलशं निष्कास्य तं मृद्घटं कूपे पातयित्वा उपरि आगतः । तं कांस्यकलशं गोपयित्वा गृहम् आगत्य शयितः ।

परेद्यवि वणिजा सह कूपसमीपं गत्वा तत्र अवतीर्य सः मृदः कञ्चन घटम् उपरि आनीतवान् । तद् दृष्टवतः वणिजः मुखं विच्छायम् अभवत् । सः भीतः सन् - ''मङ्गल ! एषः अस्माकं न । अन्यस्य स्यात् । पुनः एकवारम् अवतीर्य सम्यक् अन्विष्यतु'' इति उक्तवान् ।

मङ्गलः पुनः कूपे निमज्जनं कृत्वा बहुसमयपर्यन्तं तत्र स्थित्वा ततः उपरि आगत्य - ''स्वामिन् ! एतस्मात् घटात् ऋते अन्यः कोऽपि कलशः तत्र नास्ति । प्रायः जलस्य प्रभावेण भवतः कांस्यघटः मृन्मयः सञ्जातः इति मन्ये'' इति उक्त्वा स्वगृहं गतः ।

ततः सः वणिक् अन्यान् त्रिचतुरः आहूय कूपजलं सर्वं रिक्तीकारितवान् । किन्तु तदीयः कलशः न लब्धः ।

मङ्गलस्य वचनस्य तात्पर्यं वणिक् इदानीं सम्यक् ज्ञातवान् । सः रात्रौ रहसि मङ्गलस्य गृहं गत्वा तस्य कांस्यमूर्तिं प्रत्यर्प्य स्वस्य कांस्यघटं प्रत्यानीतवान् ।





# प्रमुखः निर्णयः

श्रीमती पुत्र्या अरुणया सह कष्टेन निवसति । तस्याः पतिः सद्यःकाले दिवं गतः । अतः सा कष्टस्थितौ अस्ति । साहाय्यकर्ता कोऽपि नास्ति तस्याः ।

तस्याः भ्रातृजाया भानुमती । सा धनिककुलीया । भगवता तस्यै प्रभूता सम्पत्तिः दत्ता अस्ति । यद्यपि सा श्रीमत्याः गृहं गतवती, तथापि साहाय्यकरणवार्ता कामपि अनुक्त्वा एव प्रत्यागतवती ।

दौर्भाग्यवशात् श्रीमती अपि अकस्मात् दिवं गता । तदा षोडशवर्षीया अरुणा अनाथा जाता । श्रीमत्याः अन्त्यसंस्कारार्थं भानुमती गतवती आसीत् । यदा सा गृहं प्रति प्रस्थातुम् उद्युक्ता तदा तस्याः स्वभावं जानन्तः द्वित्राः ग्रामप्रमुखाः उक्तवन्तः – ''स्वग्रामं प्रति गमनसमये एषा अपि आत्मना सह नेतव्या भवत्या । एतस्याः पोषणं भवत्याः दायित्वम् । यदि एतत् भवती सम्यक् न निर्वहेत् तर्हि जनाः भवत्याः उपहासं कुर्युः'' इति ।

तदा अनन्यगतिकतया तया अरुणा आत्मना सह नेतव्या एव अभवत् । सा अचिन्तयत् – 'इदानीम् अरुणायाः नयनम् अपरिहार्यम् । भवतु नाम । एतस्याः द्वारा सर्वाणि गृहकार्याणि कारयिष्यामि' इति ।

अतः तां गृहं नीतवती सा सर्वाणि गृहकार्याणि तस्याः उपरि आरोपितवती । एतस्मात् अरुणायाः महत् दुःखम् अभवत् । तथापि वराकी असहाया किं वा कर्तुं शक्नुयात् सा ? विना प्रतिवचनं सर्वाणि कार्याणि करोति स्म सा ।

तस्मिन् गृहे पञ्च जनाः निवसन्ति स्म । ते च – भानुमती, तस्याः पुत्रः सुरजः, तस्याः अनुजः पद्मनाभः, अनुजस्य उभे पुत्र्यौ च । ग्रामजनाः वदन्ति स्म यत् पद्मनाभस्य पुत्री मालिनी एव सुरजस्य पत्नी भविष्यति इति ।

सुरजः गुणवान् बुद्धिमान् च । किन्तु गृहे तस्य वचनस्य किमपि प्राधान्यं न भवति

स्म । मातुलः पद्मनाभः एव तस्य गृहस्य सर्वान् व्यवहारान् निर्वहति स्म । अतः तस्यैव निर्णयः अन्तिमः भवति स्म । सस्यारोपणं, धान्यविक्रयणं, वस्तुक्रयणम् इत्यादिषु सर्वेषु विषयेषु सः यथा वदति तथैव प्रचलति स्म । अतः कर्मकराः, कृषिकाः, वणिजः च तेनैव सह समालोचनं कृत्वा तदनुगुणम् एव व्यवहरन्ति स्म ।

गृहालङ्कारः, उत्सवाचरणम् इत्यादिषु तस्य पुत्र्याः मालत्याः निर्णयः अन्तिमः भवति स्म । पर्वदिने किं मधुरखाद्यं करणीयम् इत्यत्रापि तस्याः एव वचनस्य प्राधान्यं भवति स्म ।



''यदा मम आर्यपुत्रः दिवं गतः ततः आरभ्य एषः मम अनुजः पद्मनाभः एव समग्रं व्यवहारं निर्वहति सुचारुतया । मालती यदि न स्यात् तर्हि गृहव्यवहाराः न प्रचलेयुः एव'' इति भानुमती साभिमानं वदति स्म अरुणाम् ।

कदाचित् सूरजः पद्मनाभम् अवदत् - ''एतस्मिन् वर्षे वयं माषं, तुवरीं, मुद्गं च वर्धयाम । नगरात् आगतेन मम मित्रेण उक्तं यत् एतस्मिन् वर्षे तेषां मूल्यम् अत्युत्तमम् अस्ति इति । अतः एतस्मिन् वर्षे व्रीहिवर्धनं मास्तु'' इति ।

तदा पद्मनाभः कठिनेन स्वरेण अवदत् - ''सर्वे जनाः एवमेव चिन्तयित्वा माषादीन् यदि वर्धयेयुः तर्हि अस्माकं लाभः कथं स्यात् ? अतः वयं व्रीहिम् एव वर्धयाम'' इति ।

''अन्ये कृषिकाः व्रीहिवर्धनाय एव सन्नाहम् आरब्धवन्तः दृश्यन्ते । यतः मुद्गादीनां वर्धनाय तेषां क्षेत्रम् अनुकूलं नास्ति । अतः प्रायः अन्ये सर्वे अपि व्रीहिम् एव वर्धयिष्यन्ति'' इति अवदत् सूरजः ।

''भवतः चिन्तनं मूर्खतापूर्णम् । नगरात् उर्वरकम् आनीय शिलामय्याम् अपि भूमौ जनाः सुवर्णम् अपि उत्पादयितुम् अर्हन्ति । अतः अस्माभिः व्रीहिः एव वर्धनीयः, नान्यत् धान्यम्'' इति निर्णयस्वरेण अवदत् पद्मनाभः ।

''नैव । एवं भवितुं न अर्हति..'' इति सूरजः किमपि वक्तुम् उद्युक्तः । तावता भानुमती तत्र आगत्य उक्तवती - ''सूरज ! भवतः मातुलः ज्येष्ठः, अनुभवी च । तस्य वचनं विना विरोधम् अङ्गीकरणीयं भवता'' इति ।



ततः सा भ्रातरम् अवदत् - ''भ्रातः ! सूरजः अल्पवयस्कः । सः अननुभवी सर्वथा । अतः यथा भवते रोचते तथा करोतु । तस्य वचनस्य अधिकमहत्त्वं मास्तु'' इति ।

एतानि वचनानि शृण्वती अरुणा सूरजस्य मुखं दृष्टवती । तदीयं मुखं विच्छायं जातम् आसीत् । पार्श्वे स्थितायाः मालत्याः मुखे मन्दहासः विलसति स्म । अरुणा अचिन्तयत् - 'एतस्मिन् गृहे मम किमपि मूल्यं नास्ति । एतस्य गृहस्य वास्तविकः स्वामी सूरजः । तस्यापि स्थानं नास्ति अत्र । मम यथा तस्यापि दीना स्थितिः एव'' इति ।

इतः मासानन्तरं नवरात्रोत्सवः उपस्थितः । तदवसरे ग्रामस्य प्रमुखाः जनाः स्वव्ययेन कञ्चित् कार्यक्रमं व्यवस्थापयन्ति स्म । एतादृशाः कार्यक्रमाः प्रतिदिनं प्रवर्तन्ते स्म । आ बहोः कालात् एषा परम्परा अनुवर्तमाना आसीत् ।

कदाचित् भोजनस्य अनन्तरं सर्वेषां गृहजनानाम् उपस्थितौ पद्मनाभः अवदत् - ''प्रतिवर्षं वयं येन भागवतपाठनं कारयामः स्म सः एतस्मिन् वर्षे अस्वस्थः इति श्रूयते । अतः अन्यः कश्चन अन्वेष्टव्यः भवेत् अस्माभिः'' इति ।

एतत् श्रुतवान् सूरजः महता उत्साहेन अवदत् - ''मातुल ! अन्यस्य अन्वेषणं मास्तु । भागवतपठनं धनिकः रामदासः कारयति एव । वयम् अन्यं कार्यक्रमं व्यवस्थापयाम । नटराजनाटकमण्डल्याः जनाः मम परिचिताः । तेषां द्वारा महिषासुर-मर्दिनीनाटकम् आयोजयाम । ग्रामजनेभ्यः अपि एतत् रोचेत'' इति ।

तदा पद्मनाभः अवदत् - ''न जाने भवान् कदा विवेकेन निर्णयं करिष्यति इति । कार्यक्रमचिन्तनावसरे व्ययविषयः अपि चिन्तनीयः । नवरात्रोत्सवावसरे नाटकस्य प्रसक्तिः का इति यदि कश्चित् पृच्छेत् तर्हि किं वा वदेम वयम् ? अस्माकं गौरवं धूलिसात् भवेत्'' इति ।

लघुनि अंशे अपि पद्मनाभः स्वस्य श्रेष्ठत्वं प्रदर्शयितुम् इच्छति स्म, सूरजम् असमर्थं दर्शयति स्म च । पद्मनाभस्य एषा प्रवृत्तिः अरुणायै न अरोचत ।

एतस्याः घटनायाः अनन्तरं सप्तमे दिने नटराजनाटकसमितेः कश्चन जनः ग्राम-प्रमुखेण मिलितवान् । सः ग्रामप्रमुखम्

अवदत् - ''महिषासुरमर्दननाटकं निश्शुल्कं प्रदर्शनीयम् इति वयं निश्चयं कृतवन्तः स्मः । एतदर्थं कृपया अनुमतिः दातव्या भवता'' इति ।

एतं प्रस्तावं श्रुत्वा सन्तुष्टः ग्रामप्रमुखः ससन्तोषम् अनुमतिं दत्तवान् । सूरजेन अपि एषा वार्ता श्रुता । सोऽपि नितरां सन्तुष्टः - 'मम मातुलेन निराकृतिः दर्शिता चेदपि दैवेन मदीया इच्छा अन्येन मार्गेण पूरिता' इति ।

पूर्णिमादिने नाटकप्रदर्शनं जातम् । तेन सर्वे अपि ग्रामीणाः नितरां सन्तुष्टाः ।

प्रदर्शनस्य अन्ते नाटकसमितेः अध्यक्षः वेदिकाम् आगत्य अवदत् - ''अस्माकं नाटकं भवतां सर्वेषां सन्तोषाय जातं यत् तस्मात् वयं सन्तृप्ताः स्मः । एतदवसरे एकम् अंशम् अहम् अत्र वक्तुम् इच्छामि । विना शुल्कं वयम् अत्र नाटकं प्रदर्शयन्तः स्मः इति अस्माभिः उद्घोषितम् आसीत् । वस्तुतः तत् असत्यम् । तदर्थं वयं भवतः सर्वान्, भगवतीं त्रिपुरसुन्दरीं च क्षमां याचामहे । सप्ताहात् पूर्वं कश्चन जनः अस्मत्समीपम् आगतः आसीत् । नाटकप्रदर्शनाय यत् शुल्कं देयं तत् दत्तवान् सः । एवं तेन किमर्थं कृतम् इति वयं न जानीमः । मम नाम कुत्रापि न वक्तव्यम् इति सूचितम् आसीत् तेन । किन्तु महान्तम् आदरं दर्शितवताम्, अस्मान् पुरस्कृतवतां भवतां पुरतः तत् नाम अनुक्त्वा स्थातुं न अर्हामि अहम् । तस्य युवकस्य नाम अस्ति - सूरजः इति'' इति ।

नाटकसमितेः अध्यक्षस्य एतत् वचनं श्रुत्वा सूरजः नितराम् आश्चर्यचकितः । केन एवं कृतं स्यात् इति न अवगतं तेन । ग्रामीणाः तस्य समीपम् आगत्य प्रशंसा-



पूर्वकम् उक्तवन्तः - ''सुरज ! भवता एवं क्रियते इति वयं कदापि न चिन्तितवन्तः आस्म । मातुलस्य आधीन्ये स्थितः अबोधः बालकः भवान् इत्येव अस्माकं चिन्तनम् आसीत् । किन्तु एतस्मात् प्रसङ्गात् भवान् स्वस्य व्यवहारकौशलं निरूपितवान् अस्ति । अभिनन्दनार्हः भवान्'' इति ।

अनन्तरदिने एकान्ते मिलिता अरुणा तम् उक्तवती - ''यत् प्रवृत्तं तद्विषये महत् आश्चर्यं प्राप्तवान् स्यात् खलु भवान् ? एतस्याः घटनायाः कारणम् अहमेव अस्मि । कृपया अहं क्षन्तव्या । अस्माकं ग्रामाधिकारी मम बन्धुः । मरणात् पूर्वं मम माता तस्मै किञ्चित् धनं दत्तवती आसीत् रक्षणाय । अहम् अस्मद्गृहस्य कर्मकरं नारायणं तत्समीपं प्रेषयित्वा सर्वां व्यवस्थां कथितवती । 'एतां व्यवस्थाम् अहं स्वयं करिष्यामि । अरुणा न मद्गृहसदस्येभ्यः अन्या' इति उक्त्वा नारायणद्वारा सन्देशं प्रेषयित्वा समग्रां व्यवस्थां कारितवान् सः । सुरजनाम्ना तदीयः पुत्रः एव गत्वा धनं दत्तवान् इति मया श्रुतम् । मातुलस्य पद्मनाभस्य सम्मुखीकरणे भवतः धैर्यं नास्ति इति मया एवं कारितम् । इतः परं वा भवता धैर्येण निर्णयः स्वीकरणीयः । एतस्य गृहस्य स्वामी भवान् एव । मातुलः तु परावलम्बी । तथापि दर्पः दर्श्यते तेन । सः धैर्येण सम्मुखीकरणीयः भवता'' इति ।

तदा सुरजः मन्दहासपूर्वकम् उक्तवान् - ''अरुणे, एतस्मिन् नवरात्रोत्सवावसरे अन्यविधस्यापि महिषासुरस्य मर्दनं जातम् अस्ति । इतः परम् एतस्मिन् गृहे ममैव निर्णयः अन्तिमः भविष्यति, न अन्यस्य । मया अन्योऽपि प्रमुखः अंशः निर्णीतः अस्ति'' इति ।

''कः सः अंशः ?'' इति आश्चर्येण पृष्टवती अरुणा ।

''मया निर्णीतम् अस्ति यत् आजीवनं भवती मम मन्त्रिणी स्यात् इति । भवत्या दर्शितः मार्गः अनुसरिष्यते मया'' इति हसन् अवदत् सूरजः ।

एतस्य वचनस्य किं तात्पर्यम् इति अवगतवती अरुणा । तस्याः शिरः लज्जया अवनतं जातम् ।





# भल्लूकमान्त्रिकः

## ४

*[जलप्रपातस्य पृष्ठभागतः आगतः भल्लूकमान्त्रिकः कालीवर्मणः साहसस्य प्रशंसां कृतवान् । तस्मिन् एव समये राज्ञः जितकेतोः मन्त्री तत्र उपस्थितः । मान्त्रिकः तस्मिन् भयं जनयित्वा वधकस्य महिषस्य उपरि तम् उपवेश्य आदिष्टवान् यत् सर्वे राजधानीं प्रति गच्छेयुः इति । कालीवर्मा एतस्य आदेशस्य पालनं निराकुर्वन् खड्गं हस्तेन गृहीतवान् । तदनन्तरम्....]*

भल्लूकमान्त्रिकः कालीवर्मणः वचनं श्रुत्वा क्षणकालं स्तब्धः । अन्ये अपि तस्याम् एव स्थितौ आसन् । मन्त्री जीवगुप्तः आत्मना आरूढं महिषं प्रेरयन् कालीवर्मणः समीपं गन्तुम् उद्युक्तः । तदा भल्लूकमान्त्रिकः तम् आज्ञास्वरेण अपृच्छत् – ''अये, किं क्रियमाणम् अस्ति भवता ? मद्विरुद्धं किं कालीवर्मा प्रेरयितुम् इष्यते ?'' इति ।

एतं प्रश्नं श्रुत्वा जीवगुप्तः गमनं स्थगयन् शान्तस्वरेण अवदत् – ''महाशय ! भवता मद्विषये अन्यथा चिन्तितम् । महामान्त्रिकस्य भवतः आदेशस्य पालनम् एव हिताय इति अहं तं बोधयितुम् इच्छन् तत्समीपं गच्छन् आसम्'' इति ।

तदा भल्लूकमान्त्रिकः – ''भवान् यं युवकं बोधयितुम् इच्छति सः एव भवतः बोधने समर्थः । भवतः सर्वान् स एव आदेशेन नियन्त्रयिष्यति'' इति उक्त्वा खड्गहस्तं क्रोधेन पश्यन्तं कालीवर्माणम् अवदत् – ''अये कालीवर्मन् ! अलम्



अविवेकेन । भवता जीवने अधिकः अनुभवः न प्राप्तः । इदानीम् आवां स्वस्य स्वस्य मार्गम् अनुसरावः चेत् किं भवेत् इति किं भवान् चिन्तितवान् ?'' इति ।

''एतद्विषये चिन्तनीयं किम् अस्ति ? भवान् प्रपाताभिमुखं गमिष्यति । अहं च मम ग्रामं गत्वा कृषिं कुर्वन् आनन्देन जीवनं यापयिष्यामि । एषः अपि किं चिन्तनीयः कश्चन अंशः ?'' इति अवदत् कालीवर्मा ।

''अतः एव अहं वदामि - भवतः अनुभवः अपर्याप्तः इति । भवति साहस-शीलता यावत् अस्ति तावदेव अस्ति अज्ञानम् अपि'' इति कालीवर्माणम् उक्त्वा भल्लूकमान्त्रिकः मन्त्रिणं जीवगुप्तं पश्यन् - ''अये, मन्त्रिमहोदय ! एतस्य कालीवर्मणः बन्धनाय कति सैनिकाः प्रेषणीयाः इति राजानं वदिष्यति भवान् ? भवतः मनसि किम् अस्ति इति अहं ज्ञातुं शक्नोमि । यदि असत्यम् उच्येत तर्हि भवान् भस्मीक्रियेत मया । एतत् स्मरन् यथोचितं वदतु'' इति वदन् हस्तस्थं मान्त्रिकदण्डम् उन्नीतवान् ।

तदा जीवगुप्तः अवदत् - ''भवान् सर्वज्ञः । कस्य मनसि किम् अस्ति इति स्पष्टतया ज्ञातुं सामर्थ्यम् अस्ति एव भवतः । महाराजस्य हितम् इच्छता मया 'कालीवर्मणः वधः करणीयः' इति सूचयिष्यते । मन्त्रिणा सता मया मदीयं कर्तव्यं यथायोग्यं पालनीयं खलु ?'' इति ।

''कालीवर्मन् ! श्रुतं खलु सर्वम् अपि ? इतः परं चन्द्रशिलानगरे वासः भवतः हिताय न भवेत् इति अवगतं खलु ?'' इति अवदत् भल्लूकमान्त्रिकः ।

इदानीं कालीवर्मणा स्वस्य स्थितिः अवगता । सः अचिन्तयत् - 'महत्या सेनया युक्तस्य राज्ञः जितकेतोः सम्मुखीकरणं न हि सुकरम् । इदानीं मम पुरतः मार्गद्वयम् - सिंहासनात् जितकेतोः अवतारणाय प्रयासः, एतस्य राज्यस्य परित्यागः वा' इति ।

एवं विचिन्त्य कालीवर्मा खड्गं कोषे स्थापयित्वा अवदत् - ''गुरुवर्य ! मम हितं कस्मात् भवेत् इति भवान् जानीयात् । इदानीं मया किं करणीयम् इति आदिशतु '' इति ।

भल्लूकमान्त्रिकः मन्त्रदण्डेन कालीवर्मणः स्कन्धं स्पृशन् अवदत् - ''कालीवर्मन् ! भवतः भाग्यदेवी अनुग्रहं कुर्वती अस्ति । अतः एव भवान् मां गुरुवर्यम् उक्तवान् । साधु साधु ! किन्तु अहं न आदिशामि । मित्रत्वेन मार्गम् उपदिशामि ।

इदानीं वयं राजधानीं गत्वा राज्ञः जितकेतोः दर्पः कीदृशः इति पश्याम'' इति ।

ततः सः मन्त्रिणं पश्यन् अवदत् – ''अये मन्त्रिमहोदय ! अहं महिषम् आरुह्य प्रयाणं कर्तुम् इच्छामि । भवान् तस्य नासारज्जुं गृहीत्वा मार्गं दर्शयतु अग्रे गमनाय'' इति ।

मन्त्री जीवगुप्तः विना प्रतिवचनं महिषात् अवतीर्य तस्य नासारज्जुं गृहीतवान् ।

भल्लूकमान्त्रिकः स्वस्य मन्त्रदण्डेन महिषस्य शिरः स्पृशन् अवदत् – ''अये किङ्कर ! क्षुद्रस्य मानवस्य अधीनतां प्राप्य स्वस्य अपूर्वशक्तीः विस्मृतवान् अस्ति भवान् । अये, एतत् अनुचितम् । भूमितः किञ्चिदुपरि वायौ सञ्चरन् वेगेन नगरदिशि प्रयाणं करोतु किञ्चित्कालम्'' इति ।



अनन्तरक्षणे महिषः नासिकारन्ध्राभ्यां वेगेन वायुं बहिः प्रेरयन् मुखम् उन्नीय उच्चैः सकृत् गर्जनम् अकरोत्, वायौ डयमानः नगरं प्रति वेगेन अगच्छत् च । वेगेन डयमानस्य महिषस्य अनुसरणं कर्तुम् अशक्तवान् मन्त्री जीवगुप्तः पतन् उत्तिष्ठन् धावनपुरस्सरं महिषम् अनुसृतवान् ।

किञ्चित्कालानन्तरं महिषः भूमौ पादान् अस्थापयत् । मन्त्री अग्रे आगत्य तस्य नासारज्जुं गृहीतवान् । तदा भल्लूकमान्त्रिकः अनुसर्तॄन् उद्दिश्य अवदत् – ''महामन्त्रिणः कीदृशी गतिः जाता इति भवन्तः दृष्टवन्तः खलु ? राजा जितकेतुः अपि एतादृशीम् एव गतिं प्राप्स्यति अचिरात्'' इति ।

एतत् दृष्टवान् कालीवर्मा भल्लूकमान्त्रिकम् अवदत् – ''अहं भवन्तं मम गुरुं मतवान् अस्मि । किन्तु मदिच्छाविरुद्धं कृतम् आदेशम् अहं न पालयिष्यामि'' इति ।

''गुरुः सर्वदा तादृशम् एव आदेशं करोति, येन शिष्यस्य हितं सिद्ध्येत् । तदस्तु, किं भवान् राज्ञः जितकेतोः सिंहासनम् आरोढुम् इच्छति ?'' इति अपृच्छत् भल्लूकमान्त्रिकः कालीवर्मणः मुखं परिशीलयन् ।

''मम मनसि तादृशी कापि इच्छा नास्ति । निर्दोषाणां शिरश्छेदं सः यथा स्थगयेत् तथा किमपि करणीयम् इति एका एव मम अपेक्षा'' इति अवदत् कालीवर्मा ।

''राज्ञः मनसः परिवर्तनाय अहं यथाशक्ति प्रयासं करिष्यामि । किन्तु ये पारम्पर्येण सिंहासनारोहणाधिकारं प्राप्तवन्तः तेषां मनःपरिवर्तनं न सुलभसाध्यम् । एवं ननु मन्त्रिवर्य !'' इति मन्त्रिणम् उद्दिश्य



अवदत् भल्लूकमान्त्रिकः ।

"मान्त्रिकवर्य ! युक्तम् उक्तं भवता" इति शिरः चालयन् अवदत् जीवगुप्तः ।

एतदनन्तरं सर्वे नगरं प्रति प्रयाणं कृतवन्तः । किञ्चिद्दूरं यदा गतं तदा उभौ अश्वारोहिणौ वेगेन आगत्य तेषां गमनं स्थगयन्तौ उक्तवन्तौ - "किम् एतत् विलक्षणं कृत्यं भवताम् ? कौशेयवस्त्रं सुवर्णकुण्डलं च धृतवान् संन्यासी महिषम् आरुह्य प्रयाणं करोति । कृष्णवर्णीयः पिशाचाकारः कश्चन पञ्चकल्याणीकुलीयम् अश्वम् आरुह्य गच्छति । किम् एतत् विचित्रम् ? भवन्तः के ?" इति ।

कालीवर्मा यावत् एतस्य उत्तरं वक्तुम् उद्युक्तः तावता भल्लूकमान्त्रिकः उच्चैः हसन् अवदत् - "भवन्तौ राज्ञः जितकेतोः सैनिकौ न । अतः भवद्भ्यां वयं न अभिज्ञाताः । वयं के इति वयम् एव न जानीमः । आत्मनः अभिज्ञानं प्राप्तुम् एव अनतिदूरे विद्यमानं नगरं प्रति गच्छन्तः स्मः" इति ।

"एतादृशैः परिहासवचनैः अलम् । आवाम् उदयगिरेः राज्ञः दुर्मुखस्य सैनिकौ स्वः । इदानीम् आवां शिरीषवनतः आगच्छन्तौ स्वः । तत्र आवाभ्यां कालीवर्मा न दृष्टः । तस्य शवः अपि आवाभ्यां न प्राप्तः । राज्ञा जितकेतुना दत्तं वचनं न पालितम् । अतः अस्माकं राजा सेनासहिततया आगत्य आक्रमणं कृत्वा तं पराजेष्यते" इति उक्तवन्तौ दुर्मुखस्य सैनिकौ ।

"एतस्य सर्वस्य श्रावणेन किम् अस्माकम् ? स्वस्य कार्यस्य साधनाय गन्तुम् अर्हतः भवन्तौ" इति अवदत् भल्लूकमान्त्रिकः क्रोधेन ।

अत्रान्तरे दुर्मुखस्य सैनिकाभ्यां वधकः दृष्टः । तौ आश्चर्येण तम् अवदताम् - "अये ! वधक ! भवान् तु सर्वथा न अभिज्ञातः आसीत् आवाभ्याम् । भवान् तु शिरीषवने निवसन् वधकः एव खलु ?" इति ।

एतत् श्रुत्वा नितरां क्रुद्धः वधकः परशुम् उन्नीय - " अये गर्वशालिन् ! अहं कः इति जानन् अपि भवान् किं मम उपहासं करोति ? मम पृष्ठतः स्थितस्य महिषस्य उपरि स्थितः शवः भवता किं न दृष्टः ? तस्य मुखं पृष्ठभागाभिमुखं यथा कृतं तथैव भवतः मुखम् अपि करिष्यामि । अवगच्छतु एतत्" इति अगर्जत् ।

एतत् वचनं श्रुत्वा कालीवर्मा उत्साहं



प्राप्य वधकसमीपं गत्वा स्वस्य खड्गेन तदीयं स्कन्धं स्पृशन् - "वधक ! साधु साधु ! शठं प्रति शाठ्यम् एव शोभते । किं भवान् धैर्येण एतेषां दुर्मुखस्य सैनिकानां शिरः कर्तयितुम् अर्हति ?" इति अपृच्छत् ।

"भल्लूकमान्त्रिकः यदि आदिशेत् तर्हि एतेषां शिरसः कर्तनम् अवश्यं कुर्याम् । एतस्मिन् कार्ये ममापि अस्ति उत्साहः । गतेषु द्वित्रेषु सप्ताहेषु मम परशुना रक्तस्य रुचिः न आस्वादिता" इति अवदत् वधकः ।

एतदभ्यन्तरे दुर्मुखस्य आश्विकयोः अन्यतरः स्वस्य अश्वं प्रेरयन् उच्चस्वरेण अवदत् - "एते जनाः मानवभक्षिणः इव दृश्यन्ते । मनुष्यस्य कस्यचित् वधं कृत्वा तदीयस्य शवस्य मुखं पृष्ठभागदर्शितया योजयित्वा शवम् अश्वस्य उपरि आरोप्य नयन्तः सन्ति" इति ।

भल्लूकमान्त्रिकः तौ दुर्मुखसैनिकौ क्रोधेन पश्यन् कालीवर्माणम् अवदत् - "कालीवर्मन् ! एतयोः कापुरुषयोः कथनं कियत्कालं विना विरोधं सोढव्यम् अस्माभिः ?" इति ।

तदा कालीवर्मा खड्गम् आकृष्य हस्तेन गृहीत्वा अवदत् - "अयि दुर्मुखसैनिकौ ! किं भवद्भ्यां मौनेन इतः निर्गम्यते, उत स्वस्य शिरसः पतनं स्वागतीक्रियते ?" इति ।

मन्त्रिणा जीवगुप्तेन सह आगताः सैनिकाः अपि एतदभ्यन्तरे खड्गं हस्तेन गृहीत्वा अश्वम् अग्रे चालयन्तः -"महोदय ! एतत् कार्यं वयं करिष्यामः । वराकौ एतौ किमपि किमपि वदन्तौ दर्पं दर्शयन्तौ स्तः" इति वदन्तः अग्रे गतवन्तः ।

दुर्मुखस्य आश्विकौ खड्गं गृहीत्वा आत्मरक्षणाय प्रयासं कुर्वन्तौ इतस्ततः धावन्तौ अवदताम् - "अस्माकं महाराजः दुर्मुखः इतः अनतिदूरे स्थिते आम्रोद्याने तिष्ठति इदानीम् । सः भवतः सर्वेषां शिरः कर्तयिष्यति" इति ।

जीवगुप्तस्य उभौ आश्विकौ तौ सुदूरं धावयित्वा प्रत्यागतौ ।

अत्रान्तरे जीवगुप्तस्य एकः सैनिकः उच्चस्वरेण अवदत् - "महामन्त्रिवर्य । इदानीं दश शत्रुसैनिकाः आक्रमणाय अस्मद्दिशि आगच्छन्तः सन्ति" इति ।

तावता दश अश्वारोहिणः समीपम् आगताः । किन्तु खड्गहस्ताः ते आक्रमणं न कृतवन्तः, प्रत्युत दूरे एव स्थितवन्तः । तेषु अन्यतमः दीर्घं किञ्चन पत्रम् उद्घाट्य

उच्चस्वरेण अपठत् - ''राज्ञः दुर्मुखस्य आदेशः अस्ति यत् अत्र यावन्तः सन्ति ते सर्वे आम्रोद्याने स्थितस्य महाराजस्य सेवार्थं उपस्थिताः भवेयुः इति'' इति ।

एतम् आदेशं श्रुत्वा सर्वे आश्चर्य-चकिताः । भल्लूकमान्त्रिकः मन्त्रिणं जीवगुप्तम् उद्दिश्य - ''भवान् स्वस्य अश्वं दुर्मुखसैनिकानां समीपं नयतु'' इति आदिश्य दुर्मुखसैनिकान् पश्यन् अवदत् - ''महाराजः दुर्मुखः एव यदा आज्ञापयति तदा तदीयायाः आज्ञायाः तिरस्कारः न गौरवावहः । वयं सर्वे आम्रोद्यानं प्रति गच्छाम तावत्'' इति ।

तदा कालीवर्मा आश्चर्येण अवदत् - ''गुरुवर्य ! किमेतत् क्रियते भवता ?''

''कालीवर्मन् ! अलम् उद्वेगेन । यत् प्रवर्तिष्यते तत् स्वयम् एव द्रष्टुम् अर्हति भवान्'' इति अवदत् भल्लूकमान्त्रिकः ।

दुर्मुखस्य अश्वारोहिसैनिकाः तान् आम्रोद्यानसमीपं नीतवन्तः । राजा दुर्मुखः उच्चे आसने उपविष्टः आसीत् । तम् उभयतः खड्गधारिणः सैनिकाः स्थिताः आसन् । तस्मात् अनतिदूरे मन्त्रिणः आप्तसचिवाः च उपविष्टाः आसन् । भल्लूकमान्त्रिकं, तेन सह आगतान् च दृष्ट्वा क्रुद्धः राजा दुर्मुखः नेत्रतारके भ्रामयन् - ''अयि दुष्टाः ! भवतां विषये सर्वं ज्ञातम् अस्ति मया । भवतां सर्वेषां शिरसः छेदनं कारयिष्यामि । सर्वेषां शिरसः छेदनस्य अनन्तरं कालीवर्मणः शिरसः छेदः भविष्यति'' इति अवदत् ।

दुर्मुखस्य मुखात् निर्गतानि एतानि वचनानि श्रुत्वा क्रुद्धः भल्लूकमान्त्रिकः - 'हे आदिभल्लूक !' इति वदन् महिषात् अवतीर्य कम्पमानकायं वधकम् उद्दिश्य -''अये वधक ! भवतः शिरः दुर्मुखः कर्तयिष्यति उत तदीयं शिरः भवान् कर्तयिष्यति इत्येषः अंशः इदानीं निर्णीतः भविष्यति'' इति उक्त्वा स्वस्य दण्डस्य अग्रे स्थितेन भल्लूकमूर्तिमुखेन वधकम् अस्पृशत् ।

अनन्तरक्षणे एव वधकः भल्लूकत्वं प्राप्य परशुं भ्रामयन् उच्चैः हूँकुर्वन् घोरशब्दं च उत्पादयन् राज्ञः दुर्मुखस्य दिशि अधावत् ।

- *(अनुवर्तते)*



# वेताल-कथा

# योधानां शिल्पम्

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानाभिमुखं प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - "अये राजन् ! आत्मना निर्वोढव्यानि महाकार्याणि कानि सन्ति इति किं भवान् विस्मृतवान् ? राजतः जनाः बहु निरीक्षन्ते । भवान् तु कर्तव्यं समग्रं विस्मृत्य श्मशानमार्गे अटन् व्यर्थतया कालं यापयन् अस्ति । कस्य लक्ष्यस्य पूर्त्यै एषः श्रमः ? एतस्य विशेषकारणं किमपि भवतु नाम । किन्तु सफलताप्राप्तिसमये भवान् मयूरनामकः शिल्पी इव कार्यतः विरतः न भवेत् इत्यत्र कः विश्वासः ? मयूरः तु महान्तं परिश्रमं कृत्वा अन्ते कुत्रापि गतः । भवति



विवेकस्य जागरणाय तस्य कथां विस्तरेण श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं कनकगिरिसाम्राज्यस्य आधीन्ये बहूनि सामन्तराज्यानि आसन् । तेषु अन्यतमा आसीत् शोणपुरी अपि । तस्य राज्यस्य शासकः वीरवर्धनः । सः चेन्न-केशवस्वामिनः परमभक्तः ।

कदाचित् सः मृगयार्थं राज्यसीमायां स्थितम् अरण्यं प्रति गतवान् । तत्रत्यं प्राकृतिकं सौन्दर्यम् अपूर्वम् आसीत् । हरिन्मयेन परिसरेण युक्तस्य पर्वतस्य शिखरात् सुवर्णनदी प्रवहति स्म कलरवम् उत्पादयन्ती । अतः तत्रत्यं सौन्दर्यं वर्णनातीतम् आसीत् ।

मध्याह्नपर्यन्तं मृगयां कृतवान् राजा विश्रान्त्यर्थं कस्यचन वृक्षस्य अधः उपविष्टवान् । तत्रैव तेन निद्रा प्राप्ता । स्वप्नावस्थां गतेन तेन कुलदेवः चेन्न-केशवस्वामी दृष्टः । देवः राजानम् अवदत् - ''एतस्मिन् पर्वते पूर्वं मम मन्दिरम् आसीत् । कालप्रभावतः तत् भूमिगतं जातम् । एतस्य मूले खननात् काचित् मूर्तिः प्राप्यते । तत्र एकं मन्दिरं निर्माप्य तां मूर्तिं तत्र प्रतिष्ठापयतु । एतस्मात् भवद्राज्यस्य, भवतः च हितं भविष्यति । मन्दिर-निर्माणकार्यं मयूरनामकाय शिल्पिने अर्पयतु । सः शिल्पी राजधानीसमीपे निवसति'' इति ।

एतदनन्तरं वीरवर्धनस्य निद्रा भग्ना । तेन स्वप्नः स्मृतः । भगवद्दर्शनं स्मरता तेन महान् आनन्दः प्राप्तः । राजधानीं प्रत्यागतः सः मयूरनामकाय शिल्पिने वार्तां प्रेषितवान् - 'अचिरात् एव आगत्य अहं द्रष्टव्यः' इति ।

शिल्पी राजानं द्रष्टुम् आगतः । राजा स्वप्नवृत्तान्तम् उक्त्वा पर्वते मन्दिरं निर्मातव्यम् इत्येतं स्वस्य सङ्कल्पं तं श्रावितवान् । 'मन्दिरनिर्माणकार्यस्य समाप्तेः अनन्तरं तस्मिन् अश्वत्थमूले प्राप्यमाणा मूर्तिः प्रतिष्ठापयिष्यते' इत्यपि उक्तं तेन ।

राज्ञः आदेशस्य अनुगुणं मयूरः तत् पर्वतक्षेत्रं गतवान्, मन्दिरनिर्माणकार्यम् आरब्धवान् च । अश्वत्थवृक्षस्य अधः केशवमूर्तिः प्राप्ता । किन्तु यावत् चिन्तितं ततोऽपि अधिकः व्ययः मन्दिरनिर्माणाय जातः । राज्ञः कोषागारं रिक्तं जातम् । सम्राजे यः करः दातव्यः आसीत् तदर्थं कोषागारे धनं न आसीत् ।

एतदवसरे एव वृद्धः सम्राट् दिवं गतः। अतः तदीयः पुत्रः धीरसेनः सम्राट् जातः। सः स्वभावेन परमकृपणः। सामन्तेभ्यः अधिकं करं स्वीकर्तुम् इच्छति स्म सः। सः वीरवर्धनाय वार्तां प्रेषितवान् - 'करः शीघ्रातिशीघ्रं दातव्यः' इति। वीरवर्धनः स्वस्य असहायकतां प्रकटितवान्।

एतत् ज्ञात्वा धीरसेनः नितरां क्रुद्धः। सः शोणपुर्याः वशीकरणाय स्वस्य सैन्यं प्रेषितवान्। सेना शोणपुर्याः सीमायां नुतनतया निर्मितस्य मन्दिरस्य समीपं गता। क्रूरः सेनापतिः तत् मन्दिरं दृष्ट्वा नितरां क्रुद्धः सन् सैनिकान् आज्ञापितवान् - "सर्वासां समस्यानां मूलम् एतत् एव। अतः एतत् पातयित्वा धूलिसात्कुर्वन्तु" इति।



सैनिकाः पर्वतम् आरुह्य मन्दिरस्य अन्तः गतवन्तः। तत्र द्वारपालकमूर्ती आस्ताम्। ते शिल्पसौन्दर्यभरिते। तयोः दर्शनात् ते सैनिकाः आश्चर्येण स्तब्धाः। ते मूर्ती निर्निमेषं पश्यन्तः स्थितवन्तः। तावता काचित् विलक्षणा घटना घटिता। द्वार-पालकमूर्त्योः नेत्राभ्याम् अश्रुधारा निर्गता। एतत् दृष्ट्वा सैनिकाः नितरां भीताः। ते शिखरात् अधः आगत्य सेनापतिं प्रवृत्तं सर्वम् उक्तवन्तः। सेनापतिमुखात् सम्राजा एषा वार्ता ज्ञाता। सम्राट् अचिन्तयत् यत् किमपि अशुभं प्रवर्तिष्यते इति। अतः सः सेनां प्रत्यानायितवान्।

एतत् ज्ञात्वा शोणपुर्याः जनाः नितरां सन्तुष्टाः। किन्तु राजा न सन्तुष्टः। सः शिल्पिनम् आनाय्य क्रोधपूर्णेन स्वरेण अतर्जयत् - "कीदृशः शिल्पी भवान्! शत्रून् दृष्ट्वा खड्गम् आकृष्य युद्धं यैः क्रियेत तादृशानि शिल्पानि निर्मातव्यानि आसन् भवता। किन्तु रोदनशीलानि शिल्पानि निर्मितवान् भवान्। यदि युद्धशीलाः मूर्तयः भवता निर्मिताः स्युः तर्हि अस्माभिः अग्रे युद्धम् एव करणीयं न भवेत्" इति।

मयूरः प्रतिवचनं किमपि न उक्तवान्। अनन्तरदिने सः पर्वतमूले दशसहस्र-स्तम्भात्मकस्य मण्डपस्य निर्माणम् आरब्धवान्। प्रतिस्तम्भम् अश्वारूढानां खड्गहस्तानां युद्धोद्यतानां योधानां शिल्पानि रचितानि। राज्ञा पारितोषिकरूपेण यत् धनं दत्तं तदेव तस्य मण्डपस्य निर्माणाय उपयुक्तवान् मयूरः। यदा तत् अपर्याप्तं जातं तदा दानशीलेभ्यः सः धनं सङ्गृहीतवान्। एवं दशसहस्रस्तम्भात्मकः मण्डपः सिद्धः।



तदनन्तरं मयूरः राजानं दृष्ट्वा अवदत् - ''महाराज ! इतः परं शत्रुभीतिः न भविष्यति अस्माकम् । वयं स्वतन्त्राः भविष्यामः'' इति ।

ततः राजा वीरवर्धनः स्वस्य राज्यं स्वतन्त्रं घोषितवान् । सम्राजा एषा वार्ता ज्ञाता । कुपितः सन् सः तस्मिन् एव दिने महतीं सेनां शोणपुर्याः वशीकरणाय प्रेषितवान् ।

मयूरः वेत्रदण्डसदृशं दण्डं हस्तेन गृहीत्वा सहस्रस्तभात्मकस्य मण्डपस्य समीपम् आगतः । स्तम्भस्थम् एकं योधचित्रं तेन दण्डेन स्पृशन् - ''अये, इतः गच्छतु । खड्गप्रयोगं करोतु । युद्धक्षेत्रं प्रविशतु । राज्ञः विजयं सम्पादयतु'' इति अवदत् । एकैकम् अपि शिल्पं स्पृष्ट्वा सः एवम् अवदत् ।

शिल्पस्थाः योद्धारः सजीवाः सन्तः युद्धक्षेत्रं प्रविष्टवन्तः, वीरवर्धनस्य सेनायां सम्मिलिताः जाताः च ।

तान् सम्मुखीकर्तुं न शक्तं शत्रुसेनया । अतः शत्रवः पलायनसूत्रं पठितवन्तः । वीरवर्धनस्य जयः जातः ।

एतत् ज्ञातवतः वीरवर्धनस्य आनन्दस्य सीमा एव न आसीत् । सः शिल्पिनः मयूरस्य सम्माननं कर्तुम् इष्टवान् । किन्तु मयूरः तेन कुत्रापि न दृष्टः एव । सर्वत्र बहुधा अन्वेषणं कृतम् । तथापि मयूरः न प्राप्तः ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् । मयूरस्य व्यवहारः विलक्षणः इव भासते खलु ? सः मूर्खः इव, अहङ्कारी इव च व्यवहृतवान् ननु ? स्वस्य कलाकौशलेन शिल्पानि निर्माय राज्ञः विजयं सम्पदितवान् सः । विजयानन्तरं किमर्थम् अदृश्यतां गतं तेन ? दशसहस्रस्तम्भात्मकस्य मण्डपस्य

निर्माणाय स्वस्यैव धनं किमर्थं तेन व्ययीकृतम् ? राज्ञः हितं साधितं तेन इति तु सत्यम् । इतोऽपि अग्रे अपि तत् कर्तुं शक्यम् आसीत् खलु ? सम्माननं किमर्थं वा तेन तिरस्कृतम् ? मम एतेषां प्रश्नानाम् उत्तरं यदि भवान् जानन् अपि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत् अचिरात् एव'' इति ।

तदा त्रिविक्रमः अवदत् - ''महाशिल्पी मयूरः श्रद्धया कौशलपूर्णतया च शिल्पानि निर्मितवान् । तानि अश्रुस्रावणसमर्थानि जातानि यत् तत् तु कलादेव्याः अनुग्रहेण । मयूरस्य तन्मयतां दृष्ट्वा कलादेवी तादृशम् अनुग्रहं कृतवती । एतत् मयूरेणापि अवगतम् । किन्तु राजा तस्य प्रशंसां न कृतवान्, न वा अभिनन्दनं कृतवान् । प्रत्युत स्वार्थलाभाय तस्य उपयोगं स्वीकर्तुम् इष्टवान् । राजप्रशंसा प्राप्येत, प्रतिभायाः प्रचारः भवेत् इति सर्वे कलाकाराः इच्छन्ति एव । किन्तु मयूरेण तादृशी प्रशंसा न प्राप्ता । एतस्मात् तदीयं कोमलं हृदयम् आघातग्रस्तं जातम् । तथापि सः स्वस्य खेदं न प्रकटितवान् । प्रजानां हितं साधयितुम् ऐच्छत् सः । योधशिल्पानि रचयित्वा सः राज्ञः विजयं कारितवान् । देशस्य स्वातन्त्र्यं च साधितवान् । सः अदृश्यतां गतः यत् तस्य कारणं तु एवम् अस्ति - राज्यस्य स्वातन्त्र्याय योधानां सृष्टिः किञ्चित्प्रमाणेन समर्थनार्हा । अतः एव मयूरः योधशिल्पं निर्मितवान् । येन योधशिल्पं कारितं सः भाविनि काले स्वस्य आशानां पूरणाय कल्पवृक्षस्य कामधेनोः वा शिल्पं निर्मातुम् आदिशेत् । शिलासु सुन्दरशिल्पस्य निर्माणं शिल्पिनः कार्यम् । तत् मन्दिरनिर्माणावसरे मयूरेण कृतम् । सजीवानां निर्माणं तु सृष्टिकर्तुः ब्रह्मणः कार्यम् । सामर्थ्यात् बाह्यं कार्यं यः करोति सः पराजयं प्राप्नुयात् एव । एतत् जानन् एव मयूरः सम्माननलोभस्य वशः अभवन् कमपि अनुक्त्वा कुत्रापि गतः'' इति ।

एतेन प्रकारेण राज्ञः मौनस्य भङ्गस्य सम्पादने समर्थः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



निर्माणाय स्वस्यैव धनं किमर्थं तेन व्ययीकृतम् ? राज्ञः हितं साधितं तेन इति तु सत्यम् । इतोऽपि अग्रे अपि तत् कर्तुं शक्यम् आसीत् खलु ? सम्माननं किमर्थं वा तेन तिरस्कृतम् ? मम एतेषां प्रश्नानाम् उत्तरं यदि भवान् जानन् अपि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत् अचिरात् एव" इति ।

तदा त्रिविक्रमः अवदत् - "महाशिल्पी मयूरः श्रद्धया कौशलपूर्णतया च शिल्पानि निर्मितवान् । तानि अश्रुस्रावणसमर्थानि जातानि यत् तत् तु कलादेव्याः अनुग्रहेण । मयूरस्य तन्मयतां दृष्ट्वा कलादेवी तादृशम् अनुग्रहं कृतवती । एतत् मयूरेणापि अवगतम् । किन्तु राजा तस्य प्रशंसां न कृतवान्, न वा अभिनन्दनं कृतवान् । प्रत्युत स्वार्थलाभाय तस्य उपयोगं स्वीकर्तुम् इष्टवान् । राजप्रशंसा प्राप्येत, प्रतिभायाः प्रचारः भवेत् इति सर्वे कलाकाराः इच्छन्ति एव । किन्तु मयूरेण तादृशी प्रशंसा न प्राप्ता । एतस्मात् तदीयं कोमलं हृदयम् आघातग्रस्तं जातम् । तथापि सः स्वस्य खेदं न प्रकटितवान् । प्रजानां हितं साधयितुम् ऐच्छत् सः । योधशिल्पानि रचयित्वा सः राज्ञः विजयं कारितवान् । देशस्य स्वातन्त्र्यं च साधितवान् । सः अदृश्यतां गतः यत् तस्य कारणं तु एवम् अस्ति - राज्यस्य स्वातन्त्र्याय योधानां सृष्टिः किञ्चित्प्रमाणेन समर्थनार्हा । अतः एव मयूरः योधशिल्पं निर्मितवान् । येन योधशिल्पं कारितं सः भाविनि काले स्वस्य आशानां पूरणाय कल्पवृक्षस्य कामधेनोः वा शिल्पं निर्मातुम् आदिशेत् । शिलासु सुन्दरशिल्पस्य निर्माणं शिल्पिनः कार्यम् । तत् मन्दिरनिर्माणावसरे मयूरेण कृतम् । सजीवानां निर्माणं तु सृष्टिकर्तुः ब्रह्मणः कार्यम् । सामर्थ्यात् बाह्यं कार्यं यः करोति सः पराजयं प्राप्नुयात् एव । एतत् जानन् एव मयूरः सम्माननलोभस्य वशः अभवन् कमपि अनुक्त्वा कुत्रापि गतः" इति ।

एतेन प्रकारेण राज्ञः मौनस्य भङ्गस्य सम्पादने समर्थः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



## पुराणकथावली - २४

# वक्रः पिशाचः

योगी आलोकानन्दः अरण्ये कुटीरं निर्माय शान्त्या निवसति स्म । सः शतवर्षीयः । तस्य शिष्येषु प्रमुखः धीरानन्दः । यदा स्वस्य अन्तिमकालः सन्निहितः तदा धीरानन्दम् उत्तराधिकारित्वेन घोषितवान् सः ।

कदाचित् आलोकानन्दः धीरानन्दम् एकान्ते अवदत् - ''वत्स ! सर्वेषां विषये यथायोग्यम् अवधानं भवतु । आश्रमस्य कोणे स्थितायां पेटिकायां विचित्राकारा काचित् शिला अस्ति । शान्तिमन्त्रम् उच्चारयन् तां नद्यां क्षिपतु'' इति ।

''गुरुवर्य ! तस्याः शिलायाः किं वैशिष्ट्यम् ? यदि आपत्तिः न स्यात् तर्हि तत् किम् इति वदतु'' इति अवदत् धीरानन्दः ।

''आपत्तिः नास्ति कापि । सा च शिला मम तान्त्रिकमित्रेण केनचित् दत्ता । तस्याः अन्तः कश्चन पिशाचः अस्ति । यदि कश्चित् तया शिलया भूमिं घट्टयति तर्हि तां शिलां विभिद्य सः पिशाचः बहिः आगच्छति, 'किमपि कार्यं ददातु नैरन्तर्येण' इति वदति च । सः जनोपयोगीनि कार्याणि कर्तुं न समर्थः । किमपि वस्तु वायौ निराधारतया स्थापयितुं, विलक्षणं ध्वनिं कर्तुं, हस्ते किमपि वस्तु दर्शयितुं वा सः समर्थः । नद्यां शिलायाः क्षेपणात् तु न कापि विपत्तिः ततः'' इति विवृतवान् गुरुः ।

''एतदत्र स्मर्तव्यं यत् सकृत् शिलातः बहिः आगतः पिशाचः पुनः कदापि शिलां न प्रविशति । बहिः आनीतवता तस्मै नैरन्तर्येण कार्यं चिन्तनीयम् । पञ्चानां वर्षाणाम् अनन्तरं स्वयम् अदृश्यतां गमिष्यति सः'' इत्यपि उक्तवान् गुरुः ।





द्वित्रदिनानाम् अनन्तरम् आलोकानन्दस्य इहलोकव्यवहारः समाप्तः । तस्य उत्तर-क्रियादिकं समाप्य धीरानन्दः गुरोः आदेशं स्मरन् कोणस्थां पेटिकाम् उद्घाटितवान् । हा हन्त ! तत्र सा विलक्षणा शिला न आसीत् । धीरानन्देन आश्रमे सर्वत्र अन्वेषणं कृतम् । किन्तु सा शिला तु न प्राप्ता एव ।

ततः द्वित्राणि दिनानि अतीतानि । कदाचित् मध्यरात्रे कश्चित् आश्रमस्य द्वारस्य ताडनम् अकरोत् । धीरानन्दः झटिति उत्थाय द्वारम् उद्घाटितवान् । द्वारस्य पुरतः चन्दनः नाम शिष्यः स्थितः आसीत् । आश्रमात् अनतिदूरे स्थिते ग्रामे निवसति स्म सः ।

''चन्दन ! किमर्थं मुखे म्लानता ? का समस्या बाधते ?'' इति तम् अपृच्छत् धीरानन्दः ।

''अहो, विलक्षणा समस्या बाधते माम्'' इति उक्त्वा पश्चात्तापेन सः पुनः अवदत् - ''आर्य ! अहं क्षन्तव्यः । भवतः गुरोः च यत् सम्भाषणं प्रवृत्तं तत् मया भित्त्यन्तरितेन श्रुतम् । तस्य परिणामः अनुभूयमानः अस्ति इदानीम्'' इति ।

''किं प्रवृत्तम् ?'' इति धीरानन्देन पृष्टः चन्दनः अवदत् - ''सम्भाषणश्रवणस्य अनन्तरं कुतूहलं रोद्धुम् अशक्नुवन् अहं पेटिकास्थां शिलां चोरितवान् । मया सा शिला भूमौ बलात् क्षिप्ता । तस्मात् पिशाचः प्रत्यक्षः जातः । सः अन्यैः न दृश्यते स्म, ऋते मत्तः । सः कार्यम् अयाचत । अहं ग्रामस्य चतुष्पथं गतवान् । तत्र बहवः आसन् । 'अहम् महाश्चर्यकरीं घटनां दर्शयिष्यामि' इति तान् अवदम् । 'समीपस्थं गुल्मं दहतु' इति पिशाचम् अहम् आदिष्टवान् । अनन्तरक्षणे गुल्मे अग्नि-ज्वाला दृष्टा । 'अग्निं निवारयतु' इति अहं पिशाचम् आदिशम् । पिशाचः तथैव अकरोत् । ग्रामीणाः माम् आश्चर्येण दृष्टवन्तः । ततः अहं गृहं गतवान् । पिशाचः कार्यम् अयाचत । 'सस्यानि सिञ्चतु' इति मया आदिष्टम् । सः तु सर्वाणि सस्यानि उत्पाट्य जलेन मूलानि आर्द्रीकृतवान् आसीत् । तस्य एतादृशम् अविवेकयुक्तं कार्यं दृष्ट्वा अहं नितरां खिन्नः । अग्रिमकार्यरूपेण अहम् अवदम् - 'मम हस्ते सुवर्णाङ्गुलीयकं भवतु' इति । अनन्तरक्षणे एव मम हस्ते अङ्गुलीयकं तु आगतम् एव । तस्मिन् एव समये मम भगिन्याः अङ्गुलीयकम् अदृश्यतां गतम् आसीत् ! तदा मया अवगतम् - एकत्र विद्यमानम् अपरत्र आनीय दर्शयितुं समर्थः अयम्, ततोऽपि अधिकं सामर्थ्यं नास्ति एतस्य इति ।''

''भवान् कृष्यर्थं तं क्षेत्रं प्रति प्रेषयतु तावत्'' इति असूचयत् धीरानन्दः ।

"उद्याने यथा कृतं तथैव हानिं कुर्यात् सः इति भीतिः मम । अतः तादृशं कार्यं न उक्तम् । अन्यच्च सः आश्चर्योत्पादकानि कानिचन क्षुल्लककार्याणि कर्तुम् एव समर्थः, न तु उपकारकार्याणि । कथम् अहं तादृशानि कार्याणि पञ्च वर्षाणि यावत् कारयितुं शक्नुयाम् ? को वा तेषां दर्शनं उत्सहेत ? तदा मम गृहकार्यादीनां का गतिः स्यात् ? दिनद्वयाभ्यन्तरे एव अहं तस्य सहवासतः श्रान्तः अस्मि । प्रतिदिनं मध्यरात्रे घण्टां यावत् सः विश्राम्यति । अतः मया अस्मिन् समये अत्र आगतम् । एतस्य पीडातः कथं मोक्षः इति न ज्ञायते मया" इति वदन् अश्रूणि स्रावितवान् चन्दनः ।

धीरानन्दः क्षणकालं विचिन्त्य कमपि उपायं चन्दनम् असूचयत् । तावता तत्र उपस्थितः पिशाचः चन्दनम् अवदत् - "मम अग्रिमं कार्यं किम् इति सूचयतु" इति ।

"भवदर्थं कार्यं सिद्धम् अस्ति" इति वदन् चन्दनः आश्रमात् निर्गत्य स्वगृहं गतवान् । गृहस्य पृष्ठतः कश्चन शुनकः शयितः आसीत् । तं प्रदर्शयन् चन्दनः पिशाचम् अवदत् - "मित्र ! एतस्य शुनकस्य पुच्छं वक्रम् अस्ति । एतत् ऋजूकरणीयं भवता । तदवसरे एषः शुनकः अल्पतया अपि न पीडनीयः । एतत् कार्यं यदा समाप्यते तदा मां सूचयतु" इति ।

"क्षणाभ्यन्तरे एतत् साधयिष्यामि" इति उक्त्वा पिशाचः शुनकस्य पुच्छस्य ऋजूकरणाय प्रयत्नम् आरब्धवान् । पौनःपुन्येन ऋजूकृतं चेदपि अग्रिमे क्षणे तत् वक्रम् एव तिष्ठति स्म । पिशाचेन पुनः पुनः प्रयत्नः कृतः । तथापि शुनकस्य पुच्छस्य वक्रता न अपगता । किञ्चित्कालानन्तरं शुनकः उत्थाय अन्यत्र अगच्छत् । पिशाचः तम् अनुसरन् स्वस्य प्रयत्नम् अनुवर्तितवान् । साफल्यं तु न प्राप्तं तेन ।

वर्षाणि गतानि । पिशाचः कार्ययाचनाय पुनः चन्दनसमीपं न आगच्छत् एव । 'पञ्च वर्षाणि अतीतानि चेदपि पिशाचः कार्ये सफलः न भविष्यति । पञ्चानां वर्षाणाम् अनन्तरं सः अदृश्यतां गमिष्यति । शुनकस्य पुच्छं तु वक्रम् एव स्थास्यति' इति अचिन्तयत् चन्दनः ।

कदाचित् चन्दनः धीरानन्दसमीपं गत्वा अवदत् - "आचार्यः मानवस्य स्वभावं किमर्थं शुनकपुच्छतुल्यं वदति स्म इति इदानीं मया अवगतम् । यथा शुनकस्य पुच्छस्य ऋजुता कदाचिदपि असाध्या, तथैव केषाञ्चित् स्वभावः इहजन्मनि परिवर्तयितुम् अशक्या" इति ।

एतत् श्रुत्वा धीरानन्दः हसितवान् । चन्दनस्य मुखे अपि हासः आगतः । पुनरपि क्षमां संयाच्य ततः निर्गतवान् चन्दनः ।



# थूलारोपणात् रक्षितः जातः सः




जिम्, बिल् बक्ली च समीपस्थात् नगरात् प्रत्यागच्छन्तौ आस्ताम् । मध्ये-मार्गं गुल्मानां पृष्ठतः स्थितौ उभौ हठात् आक्रमणं कृतवन्तौ । बिल् अश्वात् अपतत् । गोलकं तस्य हृदयं विभिद्य निरगच्छत् । जिम् कथमपि ततः पलायितवान् अव्रणितः सन् ।

केभ्यश्चित् दिनेभ्यः पूर्वम् अज्ञात-मूलतः भीतिजनकानि वचनानि श्रुतानि आसन् ताभ्याम् । तथापि आयुधं विनैव प्रयाणं कृतम् आसीत् ताभ्याम् इत्यतः तौ आत्मरक्षणे असमर्थौ जातौ ।

एषा घटना अमेरिकादेशे मिस्सिसिप्पि-प्रदेशे कोलम्बियानगरे मरिन् कौण्टी इत्यत्र प्रवृत्ता ।

नवदशशतकस्य उत्तरार्धे 'श्वेतशिरस्त्र'-नामकं किञ्चन दलम् आसीत् । स्वपरिसरे निवसतां निर्धनकृषिकाणां पीडनं, ततः बलात् धनसङ्ग्रहश्च तस्य दलस्य कार्यम् आसीत् । कश्चन नीग्रोजनः तद्दलीयैः पीड्यमानः आसीत् । सः नीग्रोजनः कस्याश्चित् विधवायाः क्षेत्रे कार्यं करोति स्म । जिम्बिलौ तस्मै अधिकवेतनदानम् अङ्गीकृतवन्तौ । तस्मात् सः तयोः क्षेत्रे कार्यम् आरब्धवान् । उत्पीडकैः अत्र तस्य स्थितिः ज्ञाता एव । जिम् बिल् च प्रतिज्ञातवन्तौ यत् आवाम् एतं विषयम् आरक्षकान् सूचयिष्यावः, नगरे न्यायिकव्यवहाराय कञ्चन न्यायवादिनं नियोक्ष्यावः च इति । 'यदि एवं क्रियेत तर्हि भवतोः प्राणापहारः करिष्यते' इति दुष्टगणीयाः उक्तवन्तः । तथापि जिम् बिल् च न भीतौ । तौ न्यायिकव्यवहारम् आरब्ध-



वन्तौ । एतस्य परिणामतः एव तयोः अन्यतरः प्राणैः वियुक्तः जातः ।

"भवतः भ्रातुः हननप्रकरणे कस्यापि विषये भवतः सन्देहः अस्ति चेत् वदतु" इति आरक्षकैः उक्तम् ।

'विल्पर्विस्विषये मम सन्देहः' इति अवदत् जिम् । विल्पर्विस् तरुणः सत्कुले जातः च । पर्विस्नामके नगरे जातः सः । अतः एव तस्य नाम्नि अपि 'पर्विस्' इत्येषः शब्दः श्रूयते ।

आरक्षकैः विल्पर्विसः गृहीतः । व्यवहारः न्यायालयं प्रति नीतः । विलस्य प्रतिवेशिनः बान्धवाः च न्यायालये विचारिताः । ते सर्वे उक्तवन्तः यत् घटनादिने घटनाकाले विलः गृहे एव आसीत्, अन्यत्र गतः तु न आसीत् इति ।

तस्य भुशुण्डिका परीक्षिता । तस्मात् ज्ञातं यत् आ बहोः कालात् सा न उपयुक्ता इति । तथापि न्यायाधीशानां संशयः न अपगतः । विल्पर्विसः दण्ड्यः एव इति तैः निर्णीतम् । अतः ते तस्य उद्बन्धनम् आदिष्टवन्तः । विल्पक्षीयाः उच्चन्यायालयं प्रति व्यवहारं नीतवन्तः । तत्रापि तैः पराजयः एव प्राप्तः ।

विल्पर्विसस्य दण्डनं यैः श्रुतं ते तत्र विश्वासम् एव न कृतवन्तः । एतादृशं घोरम् अपराधं विल्पर्विसः कर्तुं न अर्हति इति तेषां विश्वासः आसीत् । कश्चन क्रिस्तालयस्य गुरुः अपि कारागारम् आगत्य विलेन मिलितवान् । तस्यापि विश्वासः आसीत् यत् विल् निरपराधः एव इति । उद्बन्धनदिनात् पूर्वस्मिन् दिने सः क्रिस्तालयगुरुः तं पुनरपि अपश्यत् । भूमौ निगडेन बद्धः आसीत् विल् । तदीयं मुखं शान्तियुक्तम् आत्मविश्वासोपेतं च आसीत् । विल् क्रिस्तालयगुरुम् अवदत् - "दैवम् एव मद्विषये कुपितम् अस्ति । भवतु नाम । कोऽपि विषादः नास्ति मम" इति ।

१८९४ तमस्य वर्षस्य फेब्रवरीमासस्य सप्तमः दिनाङ्कः उपस्थितः । सः बिलस्य उद्बन्धनाय निश्चितः दिनाङ्कः । तत् दृश्यं द्रष्टुं पुरुष-महिला-बालादयः सहस्रशः जनाः सार्वजनिके चतुष्पथे उपस्थिताः आसन् । उद्बन्धनकार्यस्य निर्वाहाय नियुक्ताः अधिकारिणः रज्जोः दृढता, ग्रन्थेः सरणार्हता इत्यादीन् द्विवारं परीक्षितवन्तः । एकविंशतिवर्षीयः तरुणः कृषिकः विल्पर्विसः मन्दगत्या आगत्य काष्ठवेदिकाम् आरूढवान् । यः आरक्षकाधिकारी तस्य बन्धनं कृतवान् आसीत् सः विल्पर्विसं गाम्भीर्येण अपृच्छत् -

''अन्तिमे क्षणे भवता वक्तव्यं किमपि अस्ति किम् ?'' इति ।

विल्पर्विसः शान्तेन स्वरेण अवदत् - ''एषः अपराधः मया न कृतः । सत्यं जानन् कोऽपि एतस्मिन् जनसमूहे यदि स्यात् तर्हि सः अग्रे आगत्य मम प्राणान् रक्षतु'' इति ।

हा हान्त ! जनसमूहात् कोऽपि अग्रे न आगतः एव । ततः विल्पर्विसस्य हस्तौ पृष्ठभागे बद्धौ । पादयोः अपि बन्धनं दृढतया कृतम् । कण्ठं परितः उद्बन्धनरज्जुः सम्यक् योजिता । जनसमूहः स्तब्धतया एतत्सर्वं परिशीलयन् मौनेन स्थितः आसीत् । आरक्षकाधिकारी - ''देवः भवते सद्गतिं ददातु'' इति बिल् पर्विसम् उक्त्वा आधारभूतं काष्ठफलकम् आकृष्टवान् ।

किञ्चित्कालं यावत् तत्र श्मशानमौनं प्रसृतम् आसीत् । ततः यत् प्रवृत्तं तत् तु आश्चर्यकरम् आसीत् । जनाः स्वस्य नेत्रयोः एव स्वयं विश्वासं न कृतवन्तः । यदा आरक्षकाधिकारिभिः द्वारम् अपसारितं तदा वर्तुलग्रन्थियुक्ता उद्बन्धकरज्जुः आकाशे लम्बमाना दृष्टा । विल्पर्विसः क्व गतः ? सः तु काष्ठफलकानाम् अधः निर्मिते गर्ते पतितः दृष्टः । तत्र पतितः सः मूर्च्छां गतः आसीत् । किन्तु मन्दं श्वसिति स्म । मुखं परितः स्थापितं कृष्णावगुण्ठनं तु यथापूर्वम् आसीत्, हस्तौ पादौ च दृढतया बद्धाः एव दृश्यन्ते स्म । एवं स्थिते अपि कथं सः उद्बन्धनरज्जुतः अधः अपतत् ? आश्चर्यकरी एषा घटना सर्वान् स्तब्धान् अकरोत् ।

अधिकारिणः तं गर्तात् उपरि आनीय पुनरपि उद्बन्धनं कर्तुं काष्ठफलकस्य उपरि स्थापितवन्तः । किन्तु क्रैस्तालयस्य गुरुः पृष्टवान् यत् अज्ञातया शक्त्या रक्षितस्य पुनरपि शूलारोपणं कथं शक्येत इति । जनाः तस्य वादं समर्थितवन्तः । महान् कोलाहलः आरब्धः । दैवस्य अपूर्वलीलां स्मरन्तः जनाः नर्तितवन्तः, गीतवन्तः, जयघोषं कृतवन्तः च । जनानां तम् उद्वेगं दृष्ट्वा आरक्षकाधिकारी नितरां भीतः । किङ्कर्तव्यतामूढः सः विल्पर्विसस्य शूलारोपणविषयं सद्यः परित्यज्य तं कारागारे अस्थापयत् ।

१८९५ तमे वर्षे डिसेम्बर्मासस्य द्वादशे दिनाङ्के पुनरपि विल्पर्विसस्य शूलारोपणम् आदिष्टम् । एतदवसरे अपि विल्पर्विसः शान्तचित्तः एव आसीत् । पूर्वं या शक्तिः माम् अरक्षत् सा एव इदानीम् अपि रक्षिष्यति एव इति तस्य दृढः विश्वासः आसीत् ।

एतदवसरे अपि नूतनं प्रमाणं किमपि न प्राप्तम् आसीत् न्यायलयेन विल्पर्विसस्य सापराधत्वं निरूपयितुम् । न्यायालयः एतस्मिन् अवसरे तस्य विषये अल्पां कृपां प्रादर्शयत् । सः कोलम्बियानगरतः पर्विस्नगरस्य कारागारं प्रति नीतः । पर्विस्नगरं



तस्य जन्मस्थलं खलु ? मरणात् पूर्वं सप्ताहं यावत् बन्धुमित्राणां सहवासं प्राप्नोतु सः इति न्यायालयस्य चिन्तनम् आसीत् ।

शूलारोपणस्य दिनद्वयात् पूर्वं पर्विस्-नगरीये कारागारे कश्चन कोलाहलः उत्पन्नः । केचन आगत्य आरक्षकान् प्रहृत्य विल् पर्विसम् आत्मना सह स्वीकृत्य पलायितवन्तः । एतां वार्तां श्रुत्वा राज्यपालः नितरां क्रुद्धः । ये विल्पर्विसस्य अपहरणं कृतवन्तः तेषां नामादिविवरणं यदि केनापि दीयेत तर्हि तस्मै प्रभूतं धनं पारितोषिकरूपेण दास्यते इति तेन उद्घोषितम् । पर्विस् तु लघुनगरम् । तस्मिन् निवसन्तः बहवः जानन्ति स्म यत् विल्पर्विस् कुत्र अस्ति इति । तथापि कोऽपि मुखं न उद्घाटितवान् । विल्पर्विसः तु नगरत् बहिः स्थितस्य पर्वतस्य पार्श्वे स्थिते अरण्ये बन्धुभिः सह रहसि निवसति स्म ।

राज्यपालस्य शासनावधिः समाप्तः । तदनन्तरकाले आगतः अपरः राज्यपालः प्रतिज्ञातवान् यत् विल्पर्विसस्य शूलारोपणदण्डः अवश्यम् अपनेष्यते इति । अतः विल्पर्विसः शरणागतः जातः । नूतनेन राज्यपालेन स्वस्य वचनं पालयता शूलारोपणदण्डः निषेधितः, सामान्यः कारागारवासः विहितः च ।

ततः द्वित्राणां वर्षाणाम् अनन्तरं सहस्राधिकैः जनैः पत्रे हस्ताङ्कनं कुर्वद्भिः क्षमादानम् अभ्यर्थ्य प्रार्थनापत्रं दत्तम् । एवं हस्ताङ्कनं कृतवत्सु प्रथमवारं न्यायविचारणां कृतवान् न्यायाधीशः अपि अन्यतमः आसीत् । एतस्य परिणामतः विल्पर्विसेन क्षमादानम् आसादितम् । सः कारागारात् मुक्तः जातः । कारागारगमनात् पूर्वं यस्मिन् उद्योगे सः आसीत् सः एव उद्योगः तेन पुनः प्राप्तः । क्रिस्तालयगुरोः सुन्दरी पुत्री तेन परिणीता । गच्छता कालेन सः एकादशानाम् अपत्यानां पिता अपि जातः ।

वर्षाणि गतानि । कदाचित् जियो बर्ड्नामकः कश्चन क्षेत्राधीशः स्वस्य मरणकाले पश्चात्तापम् अनुभवन् अवदत् यत् मया एव बिल् बक्ली मारितः, श्वेत-शिरस्त्रदलस्य द्वित्राः सदस्याः मम साहाय्यं कृतवन्तः इति ।

एषा वार्ता तस्मिन् नगरपरिसरे महान्तं कोलाहलम् अजनयत् । राज्यसर्वकारः क्षमा-याचनम् अकरोत् । दोषपरिहाररूपेण तेन विल्पर्विसाय पञ्चसहस्रं डालराणि दत्तानि ।

विल्पर्विस् उद्बन्धनकाले रक्षितः अभवत् यत् तस्य कारणभुता शक्तिः का स्यात् ? तस्य बान्धवाः अभिमानिनः च यथा अभिप्रयन्ति तथा निरपराधताविषये स्थितः तदीयः अचलः विश्वासः, हार्दभावेन कृता प्रार्थना चैव किं तम् अरक्षत् ? उत्तरं तु भगवान् एव जानाति ।



# वार्ताविशेषः




## पुस्तकभारवहनश्रमः

दूरदर्शनस्य काचित् विज्ञापिका विद्यालयं गच्छतः त्रीन् बालकान् दर्शयति । तेषां पृष्ठभागे विद्यालयस्यूतः अध्यारोपितः दृश्यते । स्यूतानाम् उपरि क्रमशः लिखितं भवति - LKG, UKG, 5 KG इति । अन्तिमस्य स्यूतस्य उपरि यत् लिखितं तत् स्यूतस्य भारं ज्ञापयति प्रायः । प्रतिदिनं तावान् भारः, तन्नाम तावन्ति पुस्तकानि, छात्रैः विद्यालयं प्रति नेतव्यानि किम् इत्येतं विषयम् अधिकृत्य एषु दिनेषु लोकसभायां चर्चा प्रवृत्ता ।

केन्द्रीयविद्यालयसङ्घटनं सर्वेषु राज्येषु केन्द्रीयविद्यालयान् चालयति । तेन निर्णीतम् अस्ति यत् 'बालानां भारः' न्यूनीकरणीयः, प्रथमकक्ष्यीयैः द्वितीयकक्ष्यीयैः च प्रतिदिनं महान् पुस्तकभारः नेतव्यः नास्ति इति ।

तस्य निर्णयः - 'पाठ्यपुस्तकानि, टिप्पणीपुस्तकानि च विद्यालये एव स्थापनीयानि । प्रतिदिनं सप्ताहान्ते वा तानि गृहं प्रति नेतव्यानि न सन्ति' इति ।

एतस्मात् छात्राणां गृहपाठलेखनपरिश्रमः अपि न भविष्यति । ते स्वस्य विरामसमयं क्रीडा, कथापुस्तकपठनं, दूरदर्शनवीक्षणम् इत्यादिभिः मनोरञ्जनकार्यैः यापयितुम् अर्हन्ति, उद्यानकार्यादिषु आत्मानं व्यापारयितुम् अर्हन्ति वा । कांश्चन मासान् यावत् अध्ययनं कृत्वा वैज्ञानिकविश्लेषणं च कृत्वा अयम् अंशः निर्णीतः शिक्षाविद्भिः ।

के.वि.सङ्घटनं चिन्तयति यत् गच्छता कालेन अग्रिमासु कक्ष्यासु अपि अयं नियमः अन्वितः स्यात् इति ।

# कश्मीरराज्यीया जानपदकथा



# राजकुमारः दाडिमं च

बहोः कालात् पूर्वं कश्चित् दयालुः राजा एतां भूमिं परिपालयति स्म । तस्य त्रयः पुत्राः आसन् । त्रयः अपि पुत्राः युवावस्थां प्राप्य सुन्दराः जाताः आसन् । समानौन्नत्यवतां तेषां रूपसाम्यम् अपि आसीत् । पिता तु पुत्राणां विषये समान-रूपेण वात्सल्यवर्षणं करोति स्म । राज्य-परिपालने युद्धकलासु च नैपुण्यं सम्पादयितुं ते राजकुमाराः बहुकालं यावत् राजधानीतः दूरे आसन् । इतःपरं पुत्राः प्रासादे स्थित्वा कर्तव्यादिकं निर्वहेयुः, विवाहिताश्च भवेयुः इति राज्ञः चिन्तनम् आसीत् ।

त्रयाणां राजकुमाराणां कृते वधूनाम् अन्वेषणार्थं कश्चन कालः अपेक्षितः भवेत् इत्यतः राजा राज्यस्य सर्वासु दिक्षु दूतान् प्रेषितवान् । प्रतिवेशिराज्यानि प्रति अपि दूताः गताः ।

केषाञ्चित् दिनानाम् अनन्तरं दूतेषु अन्यतमः प्रत्यागत्य कस्याश्चित् सुन्दर्याः युवत्याः विषये उक्तवान् ।

सा कस्याश्चित् नर्तक्याः पुत्री । सा नर्तकी राजकुमाराणां विषये विवरणं वक्तुं दूतं सूचितवती । सर्वं श्रुत्वा सा – ''मम पुत्रीं ज्येष्ठाय राजकुमाराय दातुं सिद्धा अस्मि'' दूतद्वारा वार्तां प्रेषितवती ।

'पितुः दिवं गतेः अनन्तरं ज्येष्ठः पुत्रः एव अधिकारग्रहणं करिष्यति । अतः मम पुत्री एव राज्ञी भविष्यति' इति तस्याः चिन्तनम् आसीत् ।

'मम द्वितीयः पुत्रः चित्रकलायां सङ्गीते च आसक्तिमान् अस्ति इत्यतः सा युवतिः

द्वितीयपुत्रस्य पत्नी भवितुं योग्या' इति राजा चिन्तितवान् । किन्तु सः स्वस्य अभिप्रायस्य आरोपणं कर्तुं न इच्छति स्म । अतः सः निश्चितवान् यत् परीक्षाद्वारा निर्णयः करणीयः इति ।

ततः सः त्रीन् अपि पुत्रान् आहूय नर्तक्याः, तस्याः सुन्दरपुत्र्याः च विषयं विवृतवान् । ''भवन्तः षट् मासान् यावत् यात्रां कृत्वा नर्तक्याः पुत्र्यै उपायनानि आनयन्तु । उपायनानि तादृशानि भवेयुः यानि राज्यस्य प्रजाभिः अद्यावधि दृष्टानि न स्युः'' इति पुत्रान् सूचितवान् सः ।

पुत्रैः अज्ञातदेशाः गन्तव्याः इति राज्ञः अपेक्षा आसीत् । 'यः अमूल्यम् उपायनम् आनेष्यति सः सुन्दरीं परिणयतु' इति सः चिन्तितवान् ।

राज्यशासनस्य नीरसतातः दूरे स्थातुं शक्यते इति राजकुमाराणां महान् आनन्दः अभवत् । परेद्यवि प्रातः एव ते अश्वम् आरुह्य प्रस्थिताः । विभिन्नेषु मार्गेषु गत्वा षण्मासानन्तरं प्रत्यागमनसमये निश्चिते स्थाने मेलनीयम् इति तैः निश्चितम् ।

ज्येष्ठः राजकुमारः पूर्वदिशि गतवान् । द्वितीयः पश्चिमदिशम् आश्रितवान् । कनिष्ठः तु दक्षिणदिशि गतवान् ।

ज्येष्ठः राजकुमारः बहूनि दिनानि यावत् यात्रां कृत्वा अनेकानि स्थानानि दृष्टवान् । तत्रत्यैः निर्मितानि अपूर्वाणि करकौशल-वस्तूनि सः अपश्यत् । अतिविशिष्टं किमपि तेन न दृष्टम् । तदा सः निराशः अभवत् । 'रिक्तहस्ततया एव मया प्रतिगन्तव्यं भवेत्' इति तस्य चिन्ता आरब्धा ।

अन्ते सः तादृशं स्थानं प्राप्तवान् यत्र विचित्राणि कानिचन वस्तूनि आसन् । पक्षिणः मानवाः इव सम्भाषणं कुर्वन्ति स्म तत्र । एकस्मिन् वृक्षे विविधानि फलानि आसन् । तत्र पक्षिणां ग्रहणं, वृक्षस्य नमनं वा शक्यं न आसीत् इत्यतः सः ततः किमपि न स्वीकृतवान् । गृहं प्रति फलानि नीयन्ते चेत् अपि प्रयोजनं न आसीत् । इतोऽप्यधिकेन अन्वेषणेन कार्यं सफलं स्यात् इति निश्चित्य पुनः सः अपूर्ववस्तूनाम् अन्वेषणम् अनुवर्तितवान् ।

एकत्र कश्चित् सुन्दराणां कटानां विक्रयणं करोति स्म । राजकुमारः कुतूहलेन तस्य समीपं गतवान् । कटस्य विक्रेता राज-





कुमाराय कतिचन कटान् दर्शितवान् । तेषु एकः कटः अतीवरमणीयः आसीत् । राजकुमारः यदा कटस्य मूल्यं पृष्टवान् तदा विक्रेता - ''पञ्चसहस्रं रूप्यकाणि'' इति उक्तवान् ।

''किमर्थम् एतावत् अधिकं मूल्यम् ?'' इति विचारितवान् राजकुमारः ।

तदा विक्रेता कटस्य माहात्म्यं वर्णयन् उक्तवान् - ''एतस्य कटस्य उपरि उपविश्य अपेक्षितं स्थलं स्मर्यते चेत् एषः कटः डयमानः तत् स्थलं प्रापयति'' इति ।

अधिकं चिन्तनम् अकृत्वा राजकुमारः तं कटं क्रीत्वा प्रतिगमनस्य यात्राम् आरब्धवान् ।

द्वितीयः राजकुमारः पश्चिमदिशि गतवान् आसीत् खलु ! सोऽपि अन्यान्यदेशान् दृष्टवान् । किन्तु नर्तक्याः पुत्र्यै दातुं योग्यम् उपायनं किमपि तेन न प्राप्तम् । एकत्र सः किञ्चन गृहं दृष्टवान् । तत्र गृहस्य द्वाराणि, वातायनस्य सर्वाणि द्वाराणि च उद्घाटितानि एव आसन् । किन्तु तत्र कोऽपि न वसति स्म । समीपे एव केचन आपणाः आसन् । आपणेषु सर्वविधानि वस्तूनि अपि आसन् । किन्तु आपणिकाः एव न आसन् ।

तत्रैव तेन अन्यत् विचित्रं दृष्टम् । एकस्मिन् दाडिमवृक्षे अधोभागे एव दाडिमफलानि लम्बमानानि आसन् ।

राजकुमारः एकं फलम् अवचेतुम् उद्युक्तः । तावता कुतश्चित् एकः उद्यानपालकः प्रत्यक्षः अभवत् । सः उच्चस्वरेण - ''भोः, फलं मा अवचिनोतु'' इति आज्ञापूर्वकम् उक्तवान् ।

''किमर्थम् ?'' इति राजकुमारः पृष्टवान् ।

तदा सः उद्यानपालकः - ''अस्य वृक्षस्य फलानि अमूल्यानि सन्ति'' इति उक्तवान् ।

''किं मूल्यम् एकस्य फलस्य ?'' इति पृष्टवान् राजकुमारः ।

उद्यानपालकः - ''एकस्य फलस्य मूल्यं पञ्चसहस्रं रूप्यकाणि'' इति अवदत् ।

''किमर्थम् एतावत् मूल्यम् ?'' इति राजकुमारेण यदा पृष्टं तदा फलानां विशिष्टगुणान् विवृण्वन् उद्यानपालकः अवदत् - ''एतस्य वृक्षस्य फलम् अशक्योपशमस्य अपि रोगस्य उपशमनं

कर्तुं शक्नोति । न केवलम् एतावत्, केनचित् फलस्य कर्तनं कृत्वा अन्तः विद्यमानानि मणिसदृशानि बीजानि निष्कास्यन्ते चेत् तत् फलं पूर्ववत् अखण्डं तिष्ठति । छिद्रमपि द्रष्टुं न शक्यते'' इति ।

'एतत् फलं क्रेतव्यम् एव' इति राजकुमारः निश्चितवान् । 'एतत् फलम् अपूर्वम् उपायनं भवितुम् अर्हति' इति राजकुमारस्य मतम् आसीत् । अतः सः एकं फलं क्रीत्वा अश्वम् आरुह्य स्वराज्यं प्रति प्रस्थितवान् ।

दक्षिणदिशि गतः कनिष्ठः राजकुमारः बहूनि विचित्राणि दृष्टवान् । एकत्र भवनानि काचनिर्मितानि आसन् । गृहाणां बहिर्भागः दर्पणवत् आसीत् । जनाः काचनिर्मितानि वस्त्राणि एव धरन्ति स्म । किन्तु तानि वस्त्राणि दृढानि न आसन् । पुटीकर्तुं शक्यन्ते स्म तानि । तेषाम् आकर्षणं नमनं वा सहजतया कर्तुं शक्यम् आसीत् ।

राजकुमारः सुन्दरेण आवरणेन युक्तम् एकं हस्तदर्पणं चितवान् । तस्य दर्पणस्य मूल्यं यदा विचारितं तदा आपणिकः अवदत् - ''पञ्चसहस्रं रूप्यकाणि'' इति ।

एतत् श्रुत्वा राजकुमारः - ''दर्पणस्य मूल्यम् अत्यधिकम् इति भासते'' इति उक्त्वा आपणात् प्रस्थातुम् उद्युक्तः ।

तदा विक्रेता दर्पणस्य वैशिष्ट्यम् उक्तवान् - ''एतं दर्पणं हस्तेन गृहीत्वा कोऽपि जनः यदि स्मर्यते तर्हि सः दर्पणे प्रत्यक्षः भवति'' इति ।

राजकुमारः दर्पणं क्रीत्वा अग्रजौ स्मृतवान् । अग्रजौ प्रत्यागमानमार्गे स्तः इति तेन दर्पणे दृष्टम् । तृतीयः राजकुमारः अपि झटिति अश्वम् आरुह्य अग्रजाभ्यां मेलितुं प्रस्थितवान् ।

पूर्वमेव निश्चिते स्थाने दिने समये च ते त्रयः सहोदराः सम्मिलिताः । यदा ते परस्परं स्वानुभवं कथयन्तः आसन् तदा सा सुन्दरी स्मृता, यस्याः निमित्तं तैः महत् साहसं कृतम् आसीत् । तस्याः सौन्दर्यस्य वर्णनं तैः श्रुतम् आसीत् । तस्याः मुखं न दृष्टम् आसीत् । तस्याः मुखं द्रष्टुं ते उत्सुकाः आसन् ।

कनीयान् राजकुमारः कुतूहलं सोढुम् अशक्नुवन् आत्मना आनीतं दर्पणं निष्कासितवान् । दर्पणं दृष्ट्वा सः आश्चर्येण 'अहो' इति उद्गारं प्रकटितवान् । तस्य अग्रजौ अपि आश्चर्येण कुतूहलेन च दर्पणं दृष्टवन्तौ । दर्पणे तस्याः युवत्याः प्रति-



स्वपरिचयं न उक्तवन्तः । तैः कृतां सेवां दृष्ट्वा भवत्यौ कृतज्ञतां समर्प्य तान् प्रेषितवत्यौ । प्रवृत्तम् एकवारं स्मरताम् । मम कनीयान् पुत्रः मायादर्पणं यदि न अद्रक्ष्यत् तर्हि भवत्याः पुत्र्याः अस्वास्थ्यस्य विषयः ज्ञातः न अभविष्यत् । मम द्वितीयस्य पुत्रस्य समीपे दाडिमम् आसीत् । सः दाडिमस्य औषधीयगुणं जानाति स्म अपि । किन्तु सः मम ज्येष्ठपुत्रस्य कटस्य साहाय्यं विना भवत्योः गृहं प्राप्तुं न अशक्ष्यत् । सर्वे अपि समानरूपेण भवत्याः पुत्र्याः रोगोपशमनार्थं साहाय्यं कृतवन्तः सन्ति । अहम् इदानीं मम पुत्रान् आह्वयामि । भवती एव तेषु अन्यतमं जामातृरूपेण चिनोतु'' इति उक्तवान् ।

अनन्तरं राजा पुत्रान् आहूतवान् । नर्तकी तस्याः पुत्री च तान् राजकुमारवेषेण दृष्ट्वा नितरां सन्तुष्टे ।

क्षणं यावत् ते उभे राजकुमारेभ्यः दृष्टिम् अपसारयितुं न शक्ते । माता राजानम् उद्दिश्य – ''मम पुत्र्याः रोगोपशमने भवतः द्वितीयः पुत्रः एव कारणीभूतः । सः दाडिमस्य प्रयोगं यदि न अकरिष्यत् तर्हि मम पुत्री अस्वास्थ्येन मृता अभविष्यत् । भवतः द्वितीयः पुत्रः एव मम जामाता भवतु इति यदि अहं वदामि तर्हि निश्चयेन मम पुत्री अङ्गीकरिष्यति एव । मम जामाता भवितुं सः एव योग्यः । मम पुत्र्याः अपि सः एव अस्ति अनुरूपः'' इति उक्तवती ।

तावत्पर्यन्तं मौनेन स्थितवती पुत्री द्वितीयं राजकुमारं दृष्टवती । सः पूर्वापेक्षया सुन्दरः इति अभासत । मन्दहासपूर्वकं तं पश्यन्ती सा मातरम् उद्दिश्य – '' अम्ब ! भवती यथा वदति तथा'' इति वदन्ती लज्जया शिरः अधः कृतवती ।

एतस्मात् राजा अपि सन्तुष्टः । यतः नर्तक्याः पुत्र्याः दर्शनात् पूर्वमेव सः द्वितीयपुत्रस्य वधूरूपेण तां चितवान् आसीत् । द्वितीयपुत्रस्य सङ्गीते ललितकलासु च महती आसक्तिः आसीत् । सः उद्घोषितवान् – ''मम द्वितीयः पुत्रः पूर्वं विवाहितः भवति इत्यतः तस्य पत्नी एव राज्ञ्याः स्थाने भविष्यति'' इति ।

नर्तकी अपि तदेव अपेक्षते स्म । ततः द्वितीयस्य राजकुमारस्य नर्तकीपुत्र्याः च विवाहः महता वैभवेन सम्पन्नः । अनन्तरं नर्तकी अपि तैः सह प्रासादे वासम् आरब्धवती । तत्र सर्वेऽपि ताम् आदरेण पश्यन्ति स्म ।





# भक्ष्यैः पूर्णं पर्णम्

कमलपुरनिवासिनः विद्यानाथस्य आत्मविश्वासः आसीत् यत् अहं कामपि विद्यां परिश्रमं विनैव ज्ञातुं समर्थः अस्मि इति ।

कानिचन दिनानि यावत् तेन वेदाध्ययनं कृतम् । तदनन्तरं सङ्गीतस्य, वैद्यकीयस्य, ज्योतिषस्य च अध्ययनं कृतम् । परन्तु तासु विद्यासु कस्याश्चिदपि विद्यायां पारङ्गतः भवितुम् न शक्तः सः । तस्मात् जनाः विद्यानाथस्य अपूर्णविद्याभ्यासविषये परस्परं वार्तालापं कुर्वन्तः तम् उपहसन्ति स्म । एतत् दृष्ट्वा विद्यानाथः चिन्तयति स्म यत् जनाः मद्विषयिण्या ईर्ष्यया एवं वदन्ति इति ।

तस्य मातापितरौ पुत्रस्य अपूर्णविद्याभ्यासविषये नितरां चिन्तयतः स्म । तदीयस्य भविष्यस्य विषये महान्तं परिश्रमम् आचरतः स्म । तेषु दिनेषु विद्यानाथस्य मातृभगिनी काचित् विवाहसम्बन्धं मनसि निधाय तस्य गृहम् आगतवती । विद्यानाथस्य माता दुःखपूर्णेन स्वरेण पुत्रस्य व्यवहारशैलीं विवृतवती । तदा तस्याः भगिनी उक्तवती - ''विवाहः यदि भविष्यति, तर्हि सर्वं सम्यक् भविष्यति । इदानीं यस्याः विवाहसम्बन्धार्थं मया आगतं, तस्याः नाम प्रियंवदा इति । प्रियंवदा अतीव सुन्दरी बुद्धिमती च अस्ति । सा विद्यानाथस्य अनुरूपा भविष्यति । सा पतिम् अवश्यं सन्मार्गं दर्शयिष्यति'' इति ।

विद्यानाथस्य मातापितरौ स्नुषात्वेन प्रियंवदायाः स्वीकारम् अङ्गीकृतवन्तौ । अचिरात् एव विद्यानाथप्रियंवदयोः विवाहः सम्पन्नः । श्वशुरगृहं प्रति आगमनात् किञ्चित् पूर्वं प्रियंवदा अवगतवती यत् पतिः महान् बुद्धिमान् एव, किन्तु आवश्यकतायाः अपेक्षया अपि अधिकः आत्मविश्वासः तस्मिन् अस्ति इत्यतः तस्मिन् स्थिरता न आगता इति ।

कस्मिंश्चित् दिने प्रियंवदा जलानयनाय जलाशयं प्रति प्रस्थिता । 'आगच्छतु, मिलित्वा गच्छाव' इति सा पतिम् उक्तवती । यद्यपि विद्यानाथः गन्तुं न इच्छति स्म, तथापि



पत्न्याः वचनं निराकर्तुम् अनिच्छन् सः तया सह प्रस्थितः । मध्येमार्गं तेन गुल्मस्य समीपे कश्चन बालकः पतितवान् दृष्टः । लुण्ठनं कुर्वतः तस्य मुखात् लालाफेनः निर्गच्छति स्म । प्रियंवदया कथितं – 'प्रायः अयं बालकः सर्पेण दष्टः अस्ति' इति । विद्यानाथः झटिति समीपस्थसस्यात् पर्णानि उत्पाट्य ततः रसं निष्पीड्य बालकस्य मुखे स्थापितवान् । शरीरस्य यः भागः सर्पेण दष्टः आसीत्, तमपि भागं तेन रसेन लिप्तवान् सः । दश-निमेषाभ्यन्तरे एव सः बालकः उत्थाय स्थितवान् । एतत् दृष्टवत्याः प्रियंवदायाः मनसि पत्युः वैद्यकीयज्ञानविषये महान् विश्वासः उत्पन्नः ।

एतस्याः घटनायाः सप्ताहस्य अनन्तरं पार्श्वस्थे ग्रामे कस्यचित् सङ्गीतविदुषः सङ्गीत-सभा प्रवृत्ता । प्रियंवदा पत्या सह तं सङ्गीतकार्यक्रमं गतवती । सङ्गीतकार्यक्रमस्य समाप्तेः पूर्वम् एव विद्यानाथः असन्तोषं प्रकटयन् पत्नीं प्रियंवदाम् उद्दिश्य – ''एतस्य सङ्गीतज्ञस्य सङ्गीतं कर्कशम्, असम्बद्धं च अस्ति । तालो वा लयो वा न दृश्यते'' इति वदन् ततः उत्थितवान् ।

निरुपाया प्रियंवदा अपि पत्या सह ततः प्रस्थिता । मार्गे सा पतिं निवेदितवती यत् गीतमेकं गायतु इति । सुमधुरेण रागेण विद्यानाथः मोहनरागयुक्तं गीतं गीतवान् । तत् गीतं प्रियंवदायै नितराम् अरोचत । सा पतिम् उक्तवती – ''सङ्गीतविद्यायाम् इतोऽपि प्रावीण्यं कुतो वा न सम्पादनीयं भवता ? तत् सम्पादितं चेत् महान् सङ्गीतज्ञः भविष्यति भवान्'' इति ।

''उत्तमसङ्गीतकारेण भवितव्यं चेत् का योग्यता भवेत् ? भवती वदतु'' इति प्रतिप्रश्नं कृतवान् विद्यानाथः ।

''कस्यचित् महतः सङ्गीतज्ञस्य शिष्येण भवितव्यम्, तावदेव'' इति उक्तं प्रियंवदया ।

''ममापेक्षया अपि यदि कश्चित् महान् सङ्गीतज्ञः स्यात्, तर्हि एव अयं प्रश्नः उदेति'' इति वदन् विद्यानाथः अग्रे गतवान् ।

पत्युः उत्तरं श्रुत्वा प्रियंवदा चिन्तितवती यत् मम पत्युः महान् अहङ्कारः अस्ति इति ।

एतस्याः घटनायाः दिनद्वयस्य अनन्तरं प्रियंवदायाः मातृगृहतः कश्चित् कर्मकरः आगतवान् । तस्याः मात्रा पुत्र्याः निमित्तं कानिचन मधुरभक्ष्याणि प्रेषितानि आसन् । तस्याः मातापितृभ्यां सः कर्मकरः उक्तः

आसीत् यत् प्रत्यागमनसमये भवता मम पुत्र्याः सकाशात् कुशलविषयकं पत्रमेकम् आनेतव्यम् इति ।

प्रियंवदा रात्रौ गृहकार्यादिकं समाप्य पत्रमेकं विलिख्य सुप्तवती । पत्न्याः भाषाज्ञानं कथम् अस्ति इति ज्ञातुं विद्यानाथस्य इच्छा उत्पन्ना । अतः सः तत् पत्रं पठितवान् ।

'अत्र सर्वं कुशलम्' इति पत्रम् आरब्धवती प्रियंवदा अग्रे लिखितवती आसीत् - ''मम पतिः भक्ष्यैः पूर्णेन पर्णेन सदृशः अस्ति । स्वादु भोजनं परिविष्टं चेदपि स्वादं किं वा जानाति पर्णम् ? ये भोजनं कुर्वन्ति ते एव तस्य स्वादम् अवगच्छन्ति । मम पतिः अपि एतादृशः एव । तस्मिन् वैद्यकीयज्ञानम् अस्ति, सङ्गीतज्ञानम् अस्ति, ज्योतिषज्ञानम् अपि अस्ति । परन्तु एतत् सर्वम् अपि इतरेषाम् अवरोधार्थम् एव अस्ति । एतस्मात् कारणात् भवतोः जामातुः कापि विद्या सफला सार्थिका वा न भविष्यति । परिपूर्णविदुषः पत्नी अस्मि इति अहं सगर्वं यस्मिन् दिने वदेयं तादृशं दिनं मया अचिरात् एव यथा प्राप्येत तथा आशिषा मम अनुग्रहं कुरुताम्'' इति ।

विद्यानाथः समग्रं पत्रम् अवधानपूर्वकं पठितवान् । तदा सः स्वस्य न्यूनताम् अवगतवान् । एतावत्पर्यन्तम् अपि पत्न्याः मुखात् कदापि निन्दापदमात्रम् अपि न निर्गतम् आसीत् । अद्य तस्याः हृदयस्थः भावः अवगतः आसीत् तेन । सः वैद्यवृत्तिं बहुधा इच्छति स्म । एषा विद्या इतरेषां सेवामार्गोऽपि अस्ति इति विचिन्त्य सः निर्णीतवान् यत् वैद्यकीयविद्यायां नैपुण्यं सम्पादयिष्यामि, जनसेवायां निरतः भविष्यामि च इति ।

तस्यां रात्रौ विद्यानाथेन निद्रा न प्राप्ता । परेद्यवि प्रातः शीघ्रम् एव उत्थाय सः पत्नीम् उक्तवान् - ''भवत्याः मनसः वेदना मया ज्ञाता । भवत्या मम अज्ञानं निवारितम् । तस्मिन् दिने वैद्यकीयज्ञानेन अहं तस्य बालकस्य प्राणान् रक्षितवान् । तस्मात् वैद्यकीयम् एव वर्षं यावत् पठिष्यामि । तावत् आवाभ्यां पार्थक्येन वसनीयम्'' इति ।

विद्यानाथे जातं परिवर्तनं दृष्ट्वा प्रियंवदा तस्याः मातापितरौ च नितरां सन्तुष्टाः ।

विद्यानाथः प्राचीनवैद्यशास्त्रं वर्षं यावत् अधीत्य समर्थः वैद्यः सन् स्वग्रामं प्रत्यागतः ।



# वाचकानां कृते कथास्पर्धा

## चिता कथापूर्तिः अर्हति रू. २५० पारितोषिकत्वेन



**अधस्तनां कथां पठन्तु –**

उभौ यात्रिकौ मार्गे विवादरतौ आस्ताम् । तयोः विवादम् अपरिहार्यं दृष्ट्वा केचन तौ न्यायालयं प्रति नीतवन्तः । तत्र तयोः विवदमानयोः अन्यतरः अवदत् – ''एषः मम वज्राङ्गुलीयकं द्रष्टुम् ऐच्छत् । अहम् एतस्मिन् विश्वसन् तत् दत्तवान् दर्शनाय । तत् प्राप्य एषः प्रतिपादनम् आरब्धवान् यत् एतत् मम एव इति । प्रतिदानं निराकुर्वन् अस्ति एषः'' इति ।

अपरः अवदत् – ''श्रीमन् ! एतत् ममैव । दर्शनाय एतत् मया एतस्मै दत्तम् आसीत्'' इति ।

न्यायाधीशः तयोः वचनं शृण्वन् एव तत् अङ्गुलीयकं परीक्षितवान् । सः साश्चर्यम् अवदत् – ''अहो ! राज्ञः अङ्गुलीयकम् एतत् ! पूर्वं कदाचित् विनष्टम् आसीत् । यः एतत् चोरितवान् तस्य शिरश्छेदः भविष्यति । वदताम्, भवतोः कतरः एतत् चोरितवान् ?'' इति ।

● कः यात्रिकः कीदृशम् उत्तरं दत्तवान् इति किं भवन्तः वक्तुं शक्नुयुः ?

● सः न्यायाधीशः वस्तुस्थितिं कथं वा ज्ञातवान् स्यात् इति किं भवन्तः वक्तुम् अर्हेयुः ?

**स्वस्य अभिप्रायं १००–१५० शब्दैः लिखित्वा पिहितपत्रस्य उपरि 'Story contest' इति लिखित्वा अधस्तनेन प्रवेशपत्रेण सह प्रेष्यताम् –**

**अन्तिमः दिनाङ्कः ३०, एप्रिल्, २००४**

नाम ---------------------------- वयः -------- जन्मदिनाङ्कः ----------

विद्यालयः ---------------------------------------- कक्ष्या ----------

गृहसङ्केतः ----------------------------------------------------------

---------------------------------------------------------------------

------------------------------------ Pincode ---------------

पोषकस्य हस्ताक्षरम् भागग्रहीतुः हस्ताक्षरम्

**CHANDAMAMA INDIA LIMITED**

82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097



# अपूर्वः जलोद्गमः

प्राचीने काले काशीराज्यं राजा ब्रह्मदत्तः पालयन् आसीत् । तत्समये बोधिसत्त्वः कस्मिंश्चित् वणिक्कुले जन्म प्राप्तवान् । प्राप्तवयस्कः सः पञ्चशतशकटोपेतस्य सार्थस्य स्वामी जातः ।

कदाचित् बोधिसत्त्वस्य सार्थः काञ्चित् मरुभूमिं प्राप्नोत् । सा मरुभूमिः षष्टि-योजनविस्तीर्णा आसीत् । तत्रत्याः सिकताः अतिमसृणाः आसन् । हस्तेन गृहीतं चेत् अङ्गुलीनां मध्यतः पतन्ति स्म ताः । रात्रिसमये तत्प्रदेशे शैत्यं भवति स्म । दिने सूर्यः यथा यथा अग्रे गच्छति तथा तथा औष्ण्यं वर्धते स्म । मध्याह्नकाले तु तप्ताङ्गाराः इव तापं जनयन्ति स्म सिकताः । अतः दिवासमये तस्यां मरुभूमौ सञ्चारः एव नितरां कष्टकरः आसीत् । अतः तत्र ये प्रयाणं कुर्वन्ति स्म ते रात्रौ एव प्रयाणं कुर्वन्ति स्म । मरुभूमिप्रवेशात् पूर्वम् एव पर्याप्तमात्रेण तण्डुल-तैल-काष्ठ-जलादीनि सङ्गृह्णन्ति स्म । समुद्रयात्रायां यथा तथैव नक्षत्राणां दर्शनेन दिशानाम् अभिज्ञानं प्राप्नुवन्तः ते रात्रौ स्वस्य प्रयाणम् अनुवर्तयन्ति स्म । यदा प्रातःकालः भवति तदा यात्रां स्थगयित्वा वर्तुलाकारेण शकटान् स्थगयित्वा मध्ये मण्डपं निर्मान्ति स्म । तापवृद्धेः पूर्वं पाकं कृत्वा भोजनं समाप्य सूर्यास्तपर्यन्तं विश्राम्यन्ति स्म ।

बोधिसत्त्वः एतादृशेन क्रमेण एव प्रयाणं कुर्वन् मरुभूमिसीमापर्यन्तम् आगतवान् आसीत् । इतोऽपि योजनमात्रम् अति-क्रमणीयम् आसीत् । बोधिसत्त्वः अचिन्तयत् यत् रात्र्यभ्यन्तरे मरुभूमिः अतिक्रान्तुं शक्या इति । अतः सायङ्काले प्रस्थानात् पूर्वं जलसङ्ग्रहं रिक्तीकारितवान् सः । भारः न्यूनः भवति चेत् प्रयाणं वेगेन भवितुम् अर्हति इति तस्य चिन्तनम् आसीत् ।

सर्वाग्रे स्थितः शकटः मार्गदर्शकः भवति प्रयाणे । तस्य चालकः आरात्रि निद्राम् अकुर्वन् नक्षत्राणि परिशीलयन् केन मार्गेण

गन्तव्यम् इति निर्णयति स्म । उच्चध्वनिना मार्गस्य घोषणं करोति स्म सः । किन्तु एतदवसरे निद्रां कथमपि सोढुम् अशक्नुवन् सः नेत्रे निमीलितवान् । शाकटिकस्य एतस्य प्रमादस्य कारणतः शकटे योजिताः वृषभाः तं मार्गम् अनुसृतवन्तः, येन च मार्गेण आगतम् आसीत् ।

सूर्योदयसमये शाकटिकः जागरितः जातः । नक्षत्राणां गतिं परिशील्य सः आज्ञापितवान् यत् येन मार्गेण आगतं तस्य विरुद्धेन मार्गेण गन्तव्यम् इति ।

शकटाः तदनुगुणं नीताः । किन्तु यस्मात् अपायात् ते रक्षणम् इच्छन्ति स्म सः एव अपायः तैः सम्मुखीकरणीयः अभवत् । प्रातःकाले तैः दृष्टं यत् गतायां रात्रौ यत्र वासः कृतः तदेव स्थलं प्रति आगतम् इति । तत्र जलं कुत्रापि न आसीत् ।

निराशाः सन्तः ते शकटं वर्तुलाकारेण स्थगितवन्तः । महान्तं खेदम् अनुभवन्तः शकटानाम् अधः शयनं कृतवन्तः च ।

अन्ये इव बोधिसत्त्वः अपि यदि धैर्यहीनः भवेत् तर्हि सर्वेषां मरणम् अभविष्यत् प्रायः । बोधिसत्त्वः तु प्रयाणस्थगनसमनन्तरम् एव इतस्ततः सञ्चरन् जलस्य मूलं जागरूकतया अन्वेष्टुम् उद्युक्तः जातः । बहुधा अन्वेषणस्य अनन्तरं तेन कुत्रचित् दर्भसमूहः कश्चन दृष्टः । 'एतस्मिन् स्थले गभीरस्तरे वा यदि जलं न स्यात् तर्हि एते दर्भाः प्रवृद्धाः न अभविष्यन्' इति अचिन्तयत् बोधिसत्त्वः । अतः सः स्वस्य अनुचरान् आदिष्टवान् - ''एतस्मिन् स्थले कुद्दालेन खननं क्रियताम्'' इति ।

षष्टिहस्तगभीरतापर्यन्तं यदा खननं कृतं तदा खनित्रस्य अग्रं कयाचित् शिलया घट्टितं सत् 'खन्' इति शब्दम् अकरोत् । शिलाप्राप्तिं



दृष्ट्वा सर्वे हताशाः जाताः । यतः अग्रे खननम् अशक्यम् आसीत् । किन्तु बोधिसत्त्वः हताशः न जातः । तस्य विश्वासः आसीत् यत् शिलाफलकस्य अधः जलं स्यादेव इति । सः गर्ते अवतीर्य शिलायाः समीपं स्वकर्णं नीत्वा परीक्षितवान् । जलवहनशब्दः क्षीणतया श्रुतः तेन ।

ततः सः उपरि आगत्य सहकारिणः अवदत् - ''मित्राणि ! यदि वयं हताशतया तिष्ठेम तर्हि निश्चयेन सर्वे मरणं प्राप्नुयाम । अतः इदानीं महता प्रयासेन वा अस्माभिः शिलायाः भञ्जनं करणीयम् । शिलायाः अधः जलं तु अस्ति निश्चयेन । तत् वयं यदि प्राप्नुयाम तर्हि अस्माकं सर्वेषां प्राणाः रक्षिताः भवेयुः'' इति ।

बोधिसत्त्वस्य मनसि जलप्राप्तिविषये यः विश्वासः आसीत् सः अन्येषां मनसि न आसीत् । तथापि नायकस्य आदेशं तिरस्कर्तुम् अशक्नुवन्तः ते महामुद्गरादिभिः महता बलेन तां शिलां निरन्तरं प्रहृतवन्तः ।

अन्ते शिलायां भङ्गरेखा दृष्टा । पुनरपि प्रहारः यदा कृतः तदा सा भङ्गरेखा विशाला जाता, ताडवृक्षप्रमाणेन जलं निर्गतं च । एतत् दृष्टवतां सर्वेषां महान् सन्तोषः । सर्वे महता आनन्देन तत् जलं पीतवन्तः, स्नानादिकं कृतवन्तः च । शकटानां प्राचीनानि चक्राणि भञ्जयित्वा तेषां साहाय्येन पाकः अपि कृतः । वृषभेभ्यः जलतृणादिकं दत्तम् । भोजनं समाप्य सायङ्कालपर्यन्तं सर्वैः विश्रान्तिसुखम् अनुभूतम् ।

रात्रौ पुनरपि प्रयाणम् अनुवर्तितम् । प्रस्थानात् पूर्वं तैः तत्र अभिज्ञानाय एकः उन्नतः ध्वजः प्रतिष्ठापितः । सः च दूरात् एव जलस्य उपस्थितिं सङ्केतयति स्म । ततः ते प्रयाणम् अनुवर्तयन्तः मरुभूमिम् अतिक्रम्य उद्दिष्टं नगरं प्राप्तवन्तः ।

तत्र उत्तमेन मूल्येन तेषां सर्वाणि वस्तूनि विक्रीतानि अभवन् । उत्तमः लाभः अपि प्राप्तः तैः ।

केषाञ्चित् दिनानाम् अनन्तरं बोधिसत्त्वः अनुयायिभिः सह स्वस्य नगरं प्रत्यागतवान् । वाणिज्यात् यत् धनं प्राप्तं तत् धार्मिककार्याय दानरूपेण च व्ययीकृतवान् बोधिसत्त्वः सुखेन शेषजीवनं यापितवान् ।





# विष्णुपुराणम्

क्षीरसागरमथनसमये देवताः उपहसन्तः राक्षसाः पूर्णं भुजबलं दर्शयन्तः सर्पराजं कर्षन्तः आसन् । देवाः अपि स्वस्य शक्तेः पूर्णम् उपयोगं कुर्वन्तः आसन् एव । उभयपार्श्वे कर्षणात् नितरां निपीडितः सर्पराजः वासुकिः विषम् उद्वान्तवान् ।

तच्च विषं ज्वालाः प्रसारयति स्म । तासां कारणतः बहवः राक्षसाः दग्धाः जाताः । एवं भासते स्म यत् एतस्य कारणतः समस्तः लोकः एव निर्दग्धः भवेत् इति । एतदवसरे एव मन्दरपर्वतः अपि समुद्रे निमग्नः । अतः सर्वे शिवस्य प्रार्थनां कृतवन्तः ।

शिवः हालाहलं निगीर्य कण्ठे अवरुन्धानः लोकस्य रक्षणं कृतवान् । तस्मात् सः 'विषकण्ठः' इति, 'नीलकण्ठः' इति च ख्यातः जातः । एतस्मात् एका विपत् तु अपगता । किन्तु अपरा तथैव आसीत् । मन्दरपर्वतम् उन्नेतुं केनापि न शक्तम् । तस्मात् ते विष्णुं प्रार्थितवन्तः ।

विष्णुः महाकच्छपरूपेण तिष्ठन् समुद्रे निमग्नं पर्वतम् उन्नीतवान् । अयम् अवतारः कूर्मावतारः इति उच्यते ।

कच्छपः भूत्वा पृष्ठभागेन मन्दरपर्वतं वहन् विष्णुः पर्वताग्रे अपि तिष्ठन् पादाग्रेण शिखरं नुदन् पर्वतस्य समस्थितिं रक्षति स्म । देवैः सह तिष्ठन् मथनकार्ये अपि सहकरोति स्म सः । एवं विष्णुः बहुरूपी सन् बहुत्र दृश्यते स्म ।

सागरमथनकार्यं सुचारुतया प्रवर्तते स्म । क्षीरसागरतः चन्द्रः, लक्ष्मीः, कल्पवृक्षः, कामधेनुः, ऐरावतः, उच्चैश्श्रवाः, सुरानामकं मदजनकं पेयम् इत्यादीनि



अमूल्यानि वस्तूनि प्राप्तानि ।

शिवः कण्ठे स्थितस्य विषस्य तापस्य उपशमनाय चन्द्रं शिरसि धृतवान् । तस्मात् सः चन्द्रशेखरः इति ख्यातः जातः ।

लक्ष्मीः श्रीवत्सकौस्तुभमणिना भूषितां वैजयन्तीमालां धृत्वा विष्णुना परिणीता जाता । तस्मात् विष्णुः लक्ष्मीकान्तः जातः । देवाः सुरां पिबन्तः 'सुराः' इति ख्याताः ।

अन्ते अमृतं प्राप्तम् । आयुर्वेदस्य मूलपुरुषः धन्वन्तरिः अमृतकलशं गृहीत्वा, विविधान् ओषधिरसान् अपि स्वीकृत्य पद्मासनस्थः सन् समुद्रे प्रत्यक्षः जातः ।

अमृतार्थम् एव क्षीरसागरमथनम् आरब्धं खलु ? किन्तु तत्र आदौ हालाहलं प्राप्तम् । ततः विविधानि रत्नानि प्राप्तानि । अन्ते अमृतं प्राप्तम् । यावत् अमृतं न प्राप्तं तावत् क्षीरसागरमथनम् अनुवृत्तम् । तस्मात् एव कारणात् कठिनतरं कार्यं समुद्रमथनतुल्यम् उच्यते ।

धन्वन्तरेः हस्ते स्थितम् अमृतकलशं दानवाः बलात् वशीकृतवन्तः । ते उक्तवन्तः यत् एतत् अमृतम् अस्माकम् एव इति । देवाः एतत् अङ्गीकर्तुं न सिद्धाः । अतः तत्र मुष्टीमुष्टि युद्धम् आरब्धम् । अत्रान्तरे सर्वेषां मोहयित्री जगन्मोहिनी तत्र प्रत्यक्षा जाता । तां दृष्ट्वा दानवाः नितरां मुग्धाः जाताः ।

मोहिनी राक्षसान् उक्तवती – ''अमृतं मह्यं दीयताम् । अहं तस्य वितरणं करिष्यामि'' इति । एतत् अङ्गीकुर्वन्तः राक्षसाः अमृतकलशं जगन्मोहिन्यै अर्पितवन्तः । ततः राक्षसाः देवाः च पृथक् पृथक् पङ्क्तौ उपविष्टवन्तः । उभयपङ्क्त्योः मध्ये सञ्चरन्ती नृत्यं कुर्वती मोहिनी अमृतवितरणकार्यम् आरब्धवती । दानवाः च तां पश्यन्तः आत्मानम् एव विस्मृतवन्तः ।

सा मोहिनी का इति देवाः अपि न ज्ञातवन्तः । यदा देवेभ्यः एव अमृतं दीयमानं दृष्टं, राक्षसेभ्यः तत् अदीयमानं ज्ञातं तदा ते अवगतवन्तः यत् मोहिनीरूपेण विष्णुः एव अवतारं प्राप्तवान् अस्ति इति । अतः ते विना वचनम् अमृतसेवने मग्नाः जाताः ।

देवाः निर्लिप्ततया अमृतं सेवमानाः अमरत्वं प्राप्नुवन्तः आसन् । दैत्याः च जगन्मोहिन्याः मायाजाले पतिताः सन्तः अमरत्वात् वञ्चिताः जाताः ।

जगन्मोहिनी देवेभ्यः एव अमृतं यच्छन्ती अस्ति इति राहुनामकः बुद्धिमान् राक्षसः

अवगतवान् । सः जलराक्षस्याः सिंहिकायाः पुत्रः । महामायावी सः ।

वस्तुस्थितिः उक्ता चेदपि राक्षसाः तत्र विश्वासं न करिष्यन्ति इति अवगतवान् सः झटिति देवतारूपं धृत्वा देवानां पङ्क्तौ उपविष्टवान्, सानन्दम् अमृतं पीतवान् च । सूर्यः चन्द्रः च राहोः एतत् कृत्यं झटिति अवगतवन्तौ । तौ विष्णुम् एतम् अंशं सूचितवन्तौ । विष्णुः तस्य शिरसः च्छेदाय स्वस्य चक्रं प्रेषितवान् ।



विष्णोः चक्रतः आत्मानं रक्षन् राहुः ग्रहचक्रम् अतिक्रम्य अन्तरिक्षं प्रविष्टवान् । चक्रम् अपि तस्य अनुसरणम् अकरोत् । तदीयं मुण्डं रुण्डात् पृथक् अकरोत् च । किन्तु एतावता एव राहुणा अमृतं पीतम् आसीत् इत्यतः शिरोभागः रुण्डभागः च सजीवौ एव आस्ताम् । शिरोभागः राहुः इति, रुण्डभागः च केतुः इति च नाम प्राप्नोत् । तौ ग्रहचक्रे स्थानं प्राप्तवन्तौ । तयोः कारणतः ग्रहाः नव जाताः ।

राहुः केतुः च सूर्यचन्द्रयोः विषये कुपितौ आस्ताम् । यतः ताभ्याम् एव राहुणा कृतस्य कार्यस्य रहस्यम् उद्भेदितम् आसीत् । अतः ताभ्याम् अमावास्यापूर्णिमादिनयोः तयोः पीडनम् आरब्धम् । एवं सूर्यचन्द्रयोः 'ग्रहणम्' आरब्धम् ।

समग्रम् अमृतं देवेभ्यः एव वितीर्य मोहिनी अदृश्यतां गता । अनन्तरकाले राक्षसैः एषः अंशः ज्ञातः । आत्मना कृतः प्रमादः अपि ज्ञातः । तस्मात् दिनात् आरभ्य ते विष्णोः देवानां च परमवैरिणः जाताः ।

अमृतमन्थनं निमित्तीकृत्य विष्णुः कूर्मावतारं धन्वन्तर्यवतारं मोहिन्यवतारं च प्राप्तवान् आसीत् ।

धन्वन्तरिः अमृतस्य आनयनसमये ओषधीन् ओषधिवेदं चापि आनीतवान् आसीत् । तस्मात् वैद्यशास्त्रस्य अधिदेवतात्वेन, वैद्यानां कुलदेवतात्वेन च तस्य पूजा आरब्धा ।

जगन्मोहिनी 'विश्वमोहिनी' इति ख्याता जाता । सा सौन्दर्यस्य विश्वासस्य च प्रतीकं जाता ।

नारदः जगन्मोहिन्यवतारस्य प्रशंसां कुर्वन् जगन्मोहिनीरागं महतीवीणया उत्पादयन् कैलासं गतवान् । एतत् श्रुत्वा पार्वती नारदं पृष्टवती – ''अधमाः नीचाः च राक्षसाः वञ्चिताः यत् तावन्मात्रेण



जगन्मोहिनीत्वं किं सिध्यति ?'' इति ।

''सर्वान् आनन्दसागरे निमज्जयितुम् अर्हा, स्वस्य सौन्दर्येण हावभावैः च विश्वम् एव वशीकर्तुं समर्था सा मोहिनी निश्चयेनास्ति जगन्मोहिनी एव'' इति उक्त्वा नारदः ततः निर्गतवान् ।

पार्वती एतं विषयं शिवम् उक्तवती । शिवः तत् श्रुत्वा मन्दहासमात्रं प्रकटितवान् । ततः पार्वती शिवश्च नन्दिनम् आरुह्य वैकुण्ठं गतवन्तौ । शिवः विष्णुम् अवदत् - ''भवतः जगन्मोहिन्यवतारः द्रष्टव्यः इति मम मनसि तीव्रा आकाङ्क्षा अस्ति । तदर्थम् एव अहम् अत्र आगतः'' इति ।

''सङ्कटस्य निवारणाय कदाचित् कोऽपि अवतारः आश्रयणीयः भवति । अवतार-प्राप्तिः भवतः अपि लीलाविषयः एव'' इति वदन् विष्णुः ततः अन्तर्हितः जातः ।

अनतिदूरे एव पुष्पमयेन कन्दुकेन क्रीडन्ती जगन्मोहिनी दृष्टा शिवेन । शिवः इहप्रपञ्चं विस्मृत्य तस्याः समीपं गतवान् । किन्तु जगन्मोहिनी तेन न प्राप्ता । सा तु विश्वाकाशं प्रविष्टवती । शिवः हस्तौ प्रसार्य तस्याः अनुसरणम् अकरोत् । पार्वती आश्चर्येण स्तब्धा सती एतत् दृश्यं पश्यन्ती स्थितवती ।

शिवमोहिन्योः एतं लीलाविनोदं ब्रह्मादि-देवाः कुतूहलेन दृष्टवन्तः । नन्दी निश्चेष्टः सन् अपश्यत् । नारदः महतीवीणया शिवरञ्जिनीरागम् उत्पादितवान् ।

जगन्मोहिनी अग्रे धावति स्म । शिवः धावन् ताम् अनुसरति स्म । अल्पे एव समये तौ उभौ अपि अदृश्यौ जातौ । पार्वती कैलासं प्रतिगतवती ।

जगन्मोहिनी तेजोमण्डलम् अतिक्रम्य समग्रे विश्वे शिवं भ्रामयित्वा अन्ते कैलासं प्राप्तवती । शिवेन इष्यमाणं स्पर्शं निरा-कुर्वती सा पार्वत्याः समीपं गतवती । तावता शिवः कथमपि तस्याः कटिं स्पृष्टवान् ।

''अहो, भवत्याः पतिः नितरां दुष्टः अस्ति'' इति वदन्ती जगन्मोहिनी भयम् अभिनयन्ती पार्वत्याः पार्श्वे स्थितवती ।

अनन्तरक्षणे पार्वत्याः पुरतः विष्णुः प्रत्यक्षः जातः ।

''भ्रातः ! विश्वमोहनः जगन्मोहिनीरूपः केशवः भवान् । एतत्सर्वं शिवकेशवयोः लीलानाटकम् । एवं ननु ?'' इति विष्णुम् अपृच्छत् पार्वती ।

''आम् । युक्तम् उक्तं भवत्या'' इति

वदन् महतीवीणां वादयन् नारदः तत्र उपस्थितः । जगन्मोहिनीरागेण शिवरञ्जिनी-रागेण च हरिहरलीलां गायन् त्रिषु लोकेषु सञ्चारम् आरब्धवान् सः ।

शिवः विष्णुम् अवदत् – ''अमृतम् अपि विस्मृत्य राक्षसाः भवतः जगन्मोहिनीरूपं निर्निमिषदृष्ट्या पश्यन्तः स्थिताः । तेषां पिपासा कदापि न उपशाम्यति'' इति ।

विष्णुः मन्दहासपूर्वकं पार्वतीम् उद्दिश्य – ''अग्रे गङ्गा यदा भूलोकं प्रति आगमिष्यति तदा भवदीयः पतिः तां भवत्याः सपत्नीं कुर्यात् । अतः तद्विषये अवधानं भवतु'' इति उक्त्वा ततः अदृश्यः जातः ।

कालः अतीतः । भगवान् विष्णुः प्रजापतिदेवाहुत्योः पुत्रः सन् कपिलनाम्ना अवतारं प्राप्तवान् । बाल्ये एव तपः कृत्वा ज्ञानं सम्पाद्य सः कपिलमहामुनिः इति प्रसिद्धिं प्राप्तवान् । कपिलः मातरं देवाहुतिम् अनेकानि तत्त्वानि बोधितवान् । तानि एव साङ्ख्ययोगत्वेन प्रसिद्धानि जातानि । कपिलमहर्षिः पाताललोके गुहायां निर्विरामं तपः कुर्वन् आसीत् । तदा सम्राट् सगरः शततमम् अश्वमेधयागम् आरब्धवान् । इन्द्रः यज्ञाश्वम् अपहृत्य पातालं नीत्वा तस्यां गुहायां स्थापितवान्, यस्यां च कपिलः तपः कुर्वन् आसीत् । सगरस्य शतं पुत्राः अश्वस्य अन्वेषणं कुर्वन्तः पाताललोकं प्रविष्टवन्तः । तैः तत्र कपिलमहर्षिः दृष्टः । तम् एव अश्वस्य अपहर्तारं भावयन्तः ते – ''भवतः तपः न वास्तविकः'' इति निन्दितवन्तः । एतस्मात् क्रुद्धः कपिलः नेत्रे उन्मीलितवान् । तस्मात्



ते सर्वे दग्धाः सन्तः भस्मसात् जाताः ।

तेषां भस्मनः उपरि विष्णुना पादः स्थापितः । स्वर्गे प्रवहन्तीं गङ्गां भूलोकं प्रति आनेतुं सगरस्य प्रपौत्रः भगीरथः घोरं तपः आचरितवान् । तस्मात् गङ्गा प्रसन्ना जाता । गङ्गायाः प्रवाहस्य वेगं सोढुं रोद्धुं च समर्थः शिवः अपि तेन तपस्यया तोषितः ।

गङ्गावतरणसमये गङ्गादेवीं दृष्ट्वा मुग्धः शिवः तां स्वस्य जटाजूटे निगूहितवान् । ततः भगीरथेन बहुधा प्रार्थितः सः गङ्गायाः कञ्चन भागं प्रवाहितवान् । गङ्गा भगीरथम् अनुसरन्ती पाताललोकं गत्वा स्वस्य प्रवाहेण सगरपुत्राणां भस्म आप्लाव्य तेषां सद्गतिं कल्पितवती ।

एतस्मिन् प्रकरणे परपशिवः गङ्गाधरः जातः । गङ्गा च पार्वत्याः सपत्नी जाता ।

सनकः, सनन्दनः, सनत्सुजातः, सनत्कुमारः चेति चत्वारः ब्रह्मणः मानसपुत्राः । सदा ते बालकवदेव भवन्ति । विष्णुभक्तितत्पराः ते विष्णोः गुणानां गानं कुर्वन्तः सर्वेषु लोकेषु निरन्तरम् अटन्तः भवन्ति ।

कदाचित् ते विष्णोः दर्शनाय वैकुण्ठं गतवन्तः । तत्रत्यानि सर्वाणि द्वाराणि अतिक्रम्य ते विष्णुमन्दिरं प्राप्तवन्तः ।

विष्णोः एव प्रतिरूपभूतौ जयविजयौ तत्र द्वारपालकौ । तौ उभौ अपि चतुर्भुजौ । तयोः हस्तेषु शङ्खचक्रगदाः सन्ति । एकः हस्तः अभयमुद्रां दर्शयति । तौ मुनीन् उक्तवन्तः यत् भगवद्दर्शनाय नायं समयः इति ।

तदा सनकादयः उक्तवन्तः - ''विष्णोः दर्शनविषये समयासमयादिकं भवितुं नार्हति'' इति । ततः ते जयविजययोः विरोधं तृणीकृत्य अन्तः प्रवेशाय उद्युक्ताः । तदा तौ द्वारपालकौ गदया तान् अवरुद्धवन्तः ।

तस्मात् क्रुद्धाः सनकादयः शापं यच्छन्तः उक्तवन्तः - ''भवन्तौ विष्णोः द्वारपालकत्वेन स्थातुम् अनर्हौ । अतः राक्षसजन्म प्राप्यतां भवद्भ्याम्'' इति ।

द्वारि प्रचलन्तं कोलाहलं श्रुत्वा द्वारम् उद्घाट्य लक्ष्मीसमेतः विष्णुः बहिः आगतवान् । जयविजयौ तं मुनीनां शापवृत्तान्तं श्रावितवन्तौ, स्वस्य दुःखं व्यक्तीकृतवन्तौ च । मुनयः अपि स्वस्य अविवेकविषये पश्चात्तापम् अनुभूतवन्तः ।



विविधदेशीयाः कथाः

# विपणिम् आगताः अप्सरसः

मिलफोड्हेवन्नामकं किञ्चन नगरं वेल्स्नदीतीरे आसीत् । तत्रत्याः जनाः सुखेन शान्त्या च जीवन्ति स्म । कदाचित् तत्र काश्चन विलक्षणघटनाः आरब्धाः । विपण्याम् अनेकानि वस्तूनि क्षणमात्रेण अदृश्यानि भवन्ति स्म । येषु आपणेषु एवं भवति तत्र तस्मिन्नेव स्थले सुवर्णनाणकानि दृष्टिगोचरतां यान्ति स्म ।

एकदा ग्रिफिथः नाम कश्चन आपणिकः अन्तिमं ग्राहकं प्रेषयित्वा मुखस्थं स्वेदं परिमार्जयन् आसीत् । तदा पश्यतः एव तस्य, एकः बृहत् अलाबुः अदृश्यः अभवत् । एतत् सः यावत् आश्चर्येण पश्यन् आसीत् तावता तत्र कानिचन सुवर्णनाणकानि अपि

MAHE...

दृष्टिगोचरतां गतानि । नितराम् आश्चर्य-चकितः सः तानि सुवर्णनाणकानि स्वीकृत-वान् । तावता तेन तत्र एकः सुवर्णदण्डः अपि लक्षितः । सः कस्य इति न ज्ञातम् । यत्र बहवः गमनागमनं कुर्वन्ति तत्र सुवर्ण-दण्डस्य स्वामिनः अभिज्ञानम् अशक्यम् एव इति चिन्तयन् ग्रिफिथः सुवर्णनाणकानि तं सुवर्णदण्डं चापि कोशे स्थापितवान् ।

एतत् सर्वं कथं जातं, केन एतत् सर्वं स्थापितम्, क्षणात् पूर्वम् अनूह्या एषा घटना कथं प्रवृत्ता इत्यादयः तेन ज्ञाताः । सः सर्वत्र दृष्टिं प्रसारितवान् । तदा तेन शोभमानानि वस्त्राणि धृत्वा अटन्त्यः काश्चन लघ्वाकारिकाः अप्सरसः दृष्टाः । ताः आपणेभ्यः वस्तूनि क्रीणन्त्यः आसन् । तासां दर्शनात् तु तस्य आश्चर्यं द्विगुणितं जातम् । अहं निद्रायाम् अस्मि उत जागरणावस्थायाम् इति तेन क्षणकालं न ज्ञातम् एव ।



क्षणाभ्यन्तरे तेन ज्ञातं यत् एताः अप्सरसः मया एकेनैव दृश्यमानाः सन्ति, न तु अन्यैः इति । प्रायः सुवर्णदण्डः एव अस्य कारणं स्यात् इति तेन चिन्तितम् । सः तासाम् अप्सरसां व्यवहारं परीक्षितवान् । ताः विविधेषु आपणेषु धान्यादिकं स्वीकृत्य तत्र सुवर्णनाणकानि स्थापयन्ति स्म ।

इदानीम् आपणिकेन ज्ञातं यत् एताः अप्सरसः एव अदृश्यरूपेण आगत्य वस्तूनि स्वीकृत्य सुवर्णनाणकानि स्थापयन्ति इति । सः तासाम् अप्सरसां वस्तुस्वीकरणं सूक्ष्मया दृष्ट्या परिशीलितवान् । तस्मात् सः ज्ञातवान् यत् कानि वस्तूनि तासां प्रियाणि इति ।

अनन्तरदिने तासां प्रियाणि वस्तूनि सर्वाणि स्वस्य आपणे संस्थाप्य तासां निरीक्षणं कृतवान् सः । अल्पे एव काले अप्सरसः विपण्याम् अटन्त्यः एतस्य आपणं प्रति अपि आगताः । ताभिः प्रियाणि वस्तूनि सर्वाणि तत्रैव प्राप्तानि । ताः तानि सन्तोषेण स्वीकृत्य प्रतिफलरूपेण बहूनि सुवर्ण-नाणकानि तत्र राशीकृतवत्यः । अनन्तरदिने अपि एवमेव प्रवृत्तम् । अग्रिमेषु दिनेषु अपि एवमेव । तस्मात् अल्पेन एव कालेन ग्रिफिथः महाधनिकः सञ्जातः ।

कदाचित् सः समुद्रतटे विहरन् आसीत् । तदा तत्र तेन कश्चन द्वीपः दृष्टः । अप्सरसः तस्यां दिशि एव गच्छन्त्यः आसन् । 'अप्सरसां निवासः अत्रैव स्यात् । तस्य सुवर्णदण्डस्य प्रभावेणैव अहं एतं द्वीपं पश्यन् अस्मि' इति सः चिन्तितवान् ।

'मया बहूनि वस्तूनि स्वीकृत्य एतं द्वीपं

प्रति अवश्यं गन्तव्यम् । यतः तत्रत्याः सर्वाः अपि विपणिं प्रति प्रतिदिनं आगताः न भवेयुः । अल्पेन एव कालेन मया प्रभूतं धनं सम्पादयितुं शक्येत' इति सः निर्णीतवान् ।

अनन्तरदिने सः कस्याञ्चित् नौकायां अमूल्यानि वस्तूनि संस्थाप्य तं द्वीपं प्रति गतवान् । काश्चन तं दृष्टवत्यः । स्वद्वीपे तं दृष्ट्वा नितराम् आश्चर्यचकिताः ताः झटिति गत्वा स्वसखीः एतं विषयम् उक्तवत्यः ।

बहवः अप्सरसः तानि वस्तूनि द्रष्टुं सरभसम् आगताः । ताः दृष्ट्वा ग्रिफिथः नितरां सन्तुष्टः । सः उच्चैः अवदत् - ''आगच्छन्तु ! आगच्छन्तु ! मया किं किम् आनीतम् अस्ति इति पश्यन्तु । इतः परं प्रतिदिनं भवतीभिः मिलफोड्हेवन्नगरं प्रति गमनस्य कष्टं वोढव्यं नास्ति'' इति ।

तदा तत्र अप्सरसां नायिका आगता । तया तत्र प्रवृत्तं सर्वं श्रुतं दृष्टञ्च । सा अन्याः अप्सरसः उक्तवती - ''एषः दुराशया पीडितः अस्ति । सा एव एतं नाशयिष्यति ! किन्तु तस्य एतादृशी मनःस्थितिः अस्माभिः ज्ञाता अस्ति इति तेन यथा न ज्ञायेत तथा व्यवहरन्तु भवत्यः । यानि वस्तूनि क्रेतव्यानि तानि सर्वाणि क्रीणन्तु । प्रतिदिनम् अत्र आगन्तव्यम् इति तं सूचयन्तु । शनैः शनैः वयं तम् अधोगतिं प्रापयिष्यामः'' इति ।

अप्सरसः एतत् अङ्गीकृतवत्यः । ताः ग्रिफिथसमीपं गत्वा क्रेतव्यानि वस्तूनि क्रीतवत्यः । ''श्वः अपि अस्मिन् एव समये अत्रैव आगच्छतु'' इति काचित् सुन्दरी अप्सराः तम् उक्तवती ।




ग्रिफिथस्य गमनात् परं नायिका अन्याः उक्तवती - ''श्वः सः यदा आगमिष्यति तदा सः प्रष्टव्यः यत् अस्माकं द्वीपः तेन कथं दृष्टः इति । यतः मानवानां दृष्टिगोचरः भवितुं न अर्हति एषः । यथा एतेन ज्ञातं तथा यदि अन्योऽपि एतत् रहस्यं जानीयात् तर्हि अस्माकं महत् कष्टं भवेत्'' इति ।

अनन्तरदिने वस्तुभिः सह आगतं तम् आपणिकं सर्वाः स्वेहभावेन स्वागतीकृतवत्यः । तादृशेन व्यवहारेण सः भावपरवशः जातः ।

''भवता आनीताः शाकाः नूतनाः सन्ति'' इति काचित् अप्सराः अवदत् ।

'अनुगृहीतोऽहम्' इत्यवदत् ग्रिफिथः ।

तदा तया पुनः पृष्टम् - ''भवता अस्माकं द्वीपस्य विषयः कथं ज्ञातः ? यतः मनुष्याः अस्मान् द्रष्टुं न शक्नुवन्ति खलु !'' इति ।

''कदाचित् मम आपणम् आगतासु भवतीषु काचित् प्रमादवशात् सुवर्णदण्डं त्यक्त्वा गतवती इति मन्ये । तदारभ्य अहं भवतीः सर्वाः द्रष्टुं समर्थः अभवम्'' इति उक्तवान् ग्रिफिथः ।

पुनः सा पृष्टवती - ''कीदृशः अस्ति सः दण्डः ? अहं तं द्रष्टुम् इच्छामि'' इति ।

एतत् निराकर्तुम् अशक्नुवन् ग्रिफिथः स्वसमीपे स्थितं तं सुवर्णदण्डं दर्शितवान् । सा तं स्वीकृत्य सूक्ष्मदृष्ट्या परिशीलितवती । ''अहो, एषः मम सख्याः डेज्याः । तस्याः दण्डः केभ्यश्चित् दिनेभ्यः पूर्वं कुत्रापि नष्टः । सः पुनः न प्राप्तः एव आसीत् तया'' इति उक्तवती सा अप्सराः ।

ततः सा एतं विषयं सखीम् उक्त्वा तं दण्डं पुनः प्राप्तुं कञ्चन उपायम् अपि सूचितवती ।

ग्रिफिथः पुनः यदा तं द्वीपम् आगतः तदा काचित् सुन्दरी अप्सराः तं द्वीपदर्शनव्याजेन नीतवती । द्वीपः रत्नैः वज्रैः सुवर्णैः च पूर्णः आसीत् । तत्रत्यानि गृहाणि अपि रत्नैः निर्मितानि आसन् । ग्रिफिथस्य मनसि दुराशा उत्पन्ना । एतत् सर्वं मया कथं स्वायत्तीकर्तुं शक्येत इति चिन्तनम् आरब्धवान् सः ।

''अत्रत्येषु सुवर्णरत्नादिषु भवान् यावत् इच्छति तावत् नेतुम् अर्हति । किन्तु कश्चन नियमः भवता पालनीयः एतदर्थम्'' इति उक्तवती सा अप्सराः ।

''कः सः नियमः ?'' इति महता कुतूहलेन अपृच्छत् ग्रिफिथः ।

''भवता दर्शितः सः अल्पः दण्डः दातव्यः, तावदेव'' इति अवदत् अप्सराः ।

ग्रिफिथः एतत् अङ्गीकृतवान् । सः स्वसामर्थ्यानुगुणं तानि रत्नानि नौकायां पूरितवान् । दत्तस्य वचनस्य अनुगुणं सः दण्डः प्रत्यर्पितः तेन ।

ग्रिफिथस्य नौका यथा यथा अग्रे गता तथा तथा तदीयायां नौकायां स्थितानि रत्नानि अदृश्यानि अभवन् । एतत् दृष्ट्वा आश्चर्यचकितः कुपितश्च ग्रिफिथः 'या काऽपि दृष्टा चेत् सा किमेतत् इति प्रष्टव्या इति विचिन्त्य परितः सर्वत्र दृष्टिं प्रसारितवान् । किन्तु सः द्वीपः एव तस्य दृष्टिगोचरः न अभवत् । तदा तेन ज्ञातं यत् तेन दण्डेन विना द्वीपस्य दर्शनं न प्राप्यते इति ।

निराशतया गृहम् आगतेन तेन अनन्तरं कदाचिदपि अप्सरसः न दृष्टाः एव ।





# वृद्धिरहितम् ऋणम्

लक्ष्मीशिवरामपुरनामकः कश्चन लघुः ग्रामः । किन्तु पुण्यक्षेत्रमिति प्रसिद्धिः आसीत् तस्य । ग्रामस्य प्रवेशद्वारे लक्ष्मी-मन्दिरं, मध्यभागे शिवमन्दिरम्, अन्ते राममन्दिरं च आसीत् तत्र । अतः वर्षे बहूनि दिनानि तत्र उत्सवाः प्रचलन्ति स्म । ग्रामं परितः सुन्दराः पर्वताः, प्रशान्तानि उद्यानानि च सन्ति इति कारणात् सः ग्रामः विहारयोग्यः अपि आसीत् ।

तस्मिन् ग्रामे शरभः नाम कश्चन वस्त्रापणस्वामी आसीत् । किन्तु तं काचन चिन्ता बाधते स्म यत् स्वकीयं गृहं नास्ति इति । यतः ग्रामे स्थितानाम् अन्येषां सर्वेषां वणिजां भवनानि एव सन्ति । किन्तु तस्य लघुगृहमपि नास्ति ।

कदाचित् शरभस्य पत्नी तम् उक्तवती – ''शिवालयस्य अर्चकस्य पत्नी माम् उक्तवती यत् ग्रामात् बहिः स्थितां भूमिं गृहनिर्माणाय विक्रीणानाः सन्ति इति । अस्माभिरपि गृहार्थं भूमिः क्रेतव्या इति मम इच्छा'' इति ।

स्वमनसि स्थितं विचारमेव पत्नी अपि उक्तवती इत्यतः शरभः अतीव सन्तुष्टः । अतः सः स्वेन सञ्चितेन द्रव्येण सह विवाहसमये श्वशुरेण दत्तं रत्नाङ्गुलीयकं विक्रीय प्राप्तं धनम् अपि दत्त्वा किञ्चित् भूमिं क्रीतवान् ।

''गृहार्थं भूमिः क्रीता । भाटकगृहे वासः इतःपरं न समुचितः । लघुगृहं वा निर्माय तत्रैव वासः कृतः चेत् व्ययः न्यूनः भवेत्'' इति प्रतिदिनं पत्नी शरभं वदति स्म ।

शरभः अपि पत्न्याः वचनं सत्यमिति विचिन्त्य पत्न्याः आभरणानि विक्रीय गृहनिर्माणकार्यम् आरब्धवान् । तस्य मनसि लघुगृहनिर्माणमेव उचितमिति अभासत । पत्नी अपि एतं विचारम् अङ्गीकृतवती ।

गृहस्य निर्माणम् आरब्धम् । किन्तु तस्य कार्यस्य पूर्त्यै दशसहस्ररूप्यकाणां न्यूनता

भामहः



सञ्जाता । शरभः चिन्तायां मग्नः 'कुतः धनम् आनयामि' इति । तदा तस्य पत्नी पार्वती उक्तवती – ''हरिकृष्णपुरे दशरथ-नामकः कश्चन बन्धुः अस्ति । सः मम अग्रजः इव । अपि च सः ग्रामाधिकारिणः कार्यालये उन्नते उद्योगे अस्ति । अहं स्वयं गत्वा तं धनं पृच्छामि चेत् सः दद्यात् । क्रमशः तस्य ऋणं प्रत्यर्पयाम । श्वः एव आवां तस्य गृहं गच्छाव'' इति ।

दम्पती चिन्तनानुगुणं परेद्यवि प्रातः एव गृहतः प्रस्थाय मध्याह्ने दशरथस्य गृहं प्राप्तवन्तौ । कुशलप्रश्नानन्तरं दशरथः पार्वतीं पृष्टवान् – ''गृहनिर्माणकार्यम् आरब्धम् इति वार्ता मया श्रुता । गृहनिर्माणकार्यं सम्पन्नं किम् ? गृहप्रवेशः कदा इति पूर्वमेव सूचितं चेत् महान् सन्तोषः भवेत्'' इति ।

''अन्यथा मा चिन्तयतु । सर्वेषाम् आह्वानं करणीयमिति तु अस्माकम् इच्छा महती अस्ति । किन्तु तादृशं भाग्यं नास्ति इति इदानीं भासमानम् अस्ति'' इति पार्वती खेदेन उक्तवती ।

''भगिनि ! तादृशः दुःखप्रदः विषयः कः ?'' इति दशरथः व्याकुलः सन् पृष्टवान् ।

''गृहनिर्माणकार्यं समापयितुम् इतोऽपि दशसहस्रं रूप्यकाणि आवश्यकानि । एतदर्थम् एव आवाम् अत्र आगतौ । यदि तावत् धनं भवता दीयेत तर्हि प्रतिमासं किञ्चित् किञ्चित् दत्त्वा ऋणं प्रत्यर्पयिष्यामः'' इति पार्वत्या उक्तम् ।

''अहं भवत्याः अग्रजः । एतावन्मात्रं साहाय्यं न करोमि किम् ? प्रथमं भोजनं कुरुताम्'' इति तौ आश्वासयन् दशरथः अवदत् ।

भोजनानन्तरं दशरथः दशसहस्रं रूप्यकाणि आनीय शरभस्य हस्ते ददत् उक्तवान् – ''यदा शक्यं तदा एतत् धनं प्रत्यर्पयितुम् अर्हति भवान् । एतद्विषये कापि त्वरा मास्तु'' इति ।

शरभः धनं स्यूते स्थापयन् – ''वृद्धिः कियती इत्यपि उच्यते चेत्...'' इति वाक्यं यावत् न समापितवान् तावति काले दशरथः – ''किं वदन् अस्ति भवान् ? भवतः वृद्धिं स्वीकरोमि किम् ? पार्वती मम अनुजा । एतत् साहाय्यमात्रं, तावदेव'' इति उक्तवान् ।

''भवतः साहाय्यम् आवां सर्वदा स्मरावः'' इति वदन्तौ तौ ततः प्रस्थितौ ।

तयोः गमनानन्तरं दशरथस्य पत्नी पतिं

तर्जयन्ती - ''तौ भवतः बन्धू इति जानामि । किन्तु विना वृद्धिम् ऋणदानं न उचितम् । अस्माकमपि पुत्राः सन्ति । तेषां पालन-पोषणं अस्माकं दायित्वम् । एतत् किमर्थं भवान् विस्मृतवान् ?'' इति उक्तवती ।

दशरथः उत्तरं किमपि अवदन् मौनम् आश्रितवान् । मासद्वयाभ्यन्तरे शरभस्य गृहनिर्माणकार्यं समाप्तम् । गृहप्रवेशोत्सवस्य अवसरे दशरथः सपरिवारम् आगतः । शरभः पार्वती च महता आदरेण तान् सत्कृतवन्तौ । दिनद्वयं यावत् तत्र सुखेन ते न्यवसन् ।

तृतीये दिने गृहात् बहिः उपविष्टः दशरथः पार्श्वे स्थितां पत्नीम् उक्तवान् - ''गृहात् प्रस्थानानन्तरं दिनत्रयम् अतीतम् । श्वः प्रस्थानं करवाव'' इति ।

''अत्र शिवरात्रिमहोत्सवः महता वैभवेन प्रचलति इति श्रूयते । सप्ताहाभ्यन्तरे प्रचलिष्यमाणं तम् उत्सवं समाप्य एव ग्रामं गच्छाम'' इति उक्तवती पत्नी ।

''तर्हि सप्ताहं यावत् अस्माभिः अत्र स्थातव्यम् ? किन्तु अस्माकं वासेन एतेषां कष्टं भवेत् ननु ?'' इति दशरथः पृष्टवान् ।

''अत्र कष्टं किम् ? वयं दशसहस्रं रूप्यकाणि विना वृद्धिम् ऋणरूपेण दत्तवन्तः । तावत् वृद्धिधनं तु त्यक्तमेव । अस्माकं स्थित्या तावतः धनस्य व्ययः तु न भवति, यावत् धनं तैः दातव्यम् आसीत्'' इति उक्तवती तस्य पत्नी ।

''उच्चैः मा वदतु । केनापि श्रूयेत । शरभः श्रमजीवी, ऋजुः च । अस्माकं धनं



सः अवश्यं प्रत्यर्पयिष्यति'' इति दशरथः उक्तवान् पत्नीम् ।

''इदानीन्तने काले विना वृद्धिं कः ऋणं ददाति ? भवान् अल्पामपि वृद्धिम् अस्वीकृत्य दशसहस्रं रूप्यकाणि दत्तवान् अस्ति । मम तु एषा चिन्ता अस्ति यत् एते रूप्यकाणि प्रत्यर्पयेयुः वा न वा इति । किन्तु अस्मिन् विषये मम चिन्तनेन किं प्रयोजनम् ?'' इति कठोरस्वरेण उक्तवती दशरथस्य पत्नी ।

तस्याः एतत् वचनं गृहात् बहिः आगच्छन्ती पार्वती श्रुतवती । अतः विना वचनं सा गृहस्य अन्तः गता ।

तस्मिन् दिने रात्रौ भोजनानन्तरं दशरथः हस्तं प्रक्षालयन् पार्वतीम् उक्तवान् - ''श्वः वयं प्रस्थानं करिष्यामः'' इति ।

''शिवरात्र्युत्सवः अस्माकं ग्रामे वैभवेन

सम्पत्स्यते । तावत्पर्यन्तं स्थित्वा उत्सवं दृष्ट्वा गच्छन्तु'' इति पार्वत्या उक्तम् ।

''न शक्यते भगिनि । ग्रामे कार्यं वर्तते । गन्तव्यमेव'' इति दशरथः उक्तवान् ।

''भवतः स्थितिः अशक्या चेत् पत्नी-पुत्रादयः वा अत्र भवन्तु । भवान् गच्छतु । ते उत्सवं दृष्ट्वा आगमिष्यन्ति'' इति उक्तवती पार्वती ।

''मास्तु । तेन भवत्याः अनानुकूल्यं भवेत्'' इति दशरथः उक्तवान् ।

''अत्र अनानुकूल्यं कथम् ? अग्रज ! अस्माकं गृहं भवतः साहाय्येनैव निर्मितम् । इदानीन्तने काले वृद्धिं विना कोऽपि ऋणं न ददाति । भवान् दशसहस्रं रूप्यकाणि दत्त्वा अपि अल्पामपि वृद्धिं न स्वीकृतवान् । यदि वृद्धिः अस्माभिः दत्ता स्यात् तर्हि कियत् धनं भवेत् इति जानाति किम् ? भवतः दृष्ट्या तावत् धनम् अधिकं न स्यात् । भवतः गृहे क्रियमाणेन व्ययेन अस्य धनस्य तोलनं यदि क्रियेत तर्हि भासेत यत् एषः भागः बहु अल्पः एव इति'' इति उक्तवती पार्वती ।

पार्वत्या वचनं श्रुत्वा दशरथः तस्य पत्नी च परस्परं मुखं दृष्टवन्तौ । पत्युः विषण्णं वदनं दृष्ट्वा पत्नी अधोमुखी जाता ।

''अग्रज ! कष्टपरिस्थितौ भवता साहाय्यं कृतम् । तत् साहाय्यं विना आवयोः गृहस्य निर्माणं स्वप्नः एव अभविष्यत् । किन्तु वृद्धिं स्वीकर्तुं भवान् न इच्छति, वयमपि निर्बन्धं कर्तुं न शक्नुमः । अतः तूष्णीं स्मः । किन्तु षण्मासाभ्यन्तरे भवतः स्वीकृतं धनं सवृद्धि प्रत्यर्पयिष्यामः निश्चयेन । अत्र भवान् विश्वसितु । तावत् कृपया प्रतीक्षां करोतु'' इति उक्तवती पार्वती ।

''अस्तु । यदा शक्यते तदा ददातु । त्वरा न करणीया'' इति वदन् दशरथः पत्नीमुखं दृष्टवान् । सा तु लज्जया अधोमुखी एव आसीत् ।

गभीरां परिस्थितिं दृष्ट्वा पार्वती पुनः सस्नेहं दशरथम् उक्तवती - ''अग्रज ! पत्नीपुत्रादयः उत्सवं दृष्ट्वा एव गमिष्यन्ति । भवान् अपि उत्सवदिने आगत्य अनन्तरदिने सर्वान् नेतुम् अर्हति'' इति ।



राज्ञः शान्तिदेवस्य अनुपस्थितौ वीरसिंहः शासकः भवितुं प्रयासं करोति । सः मन्त्रिणं मानवेन्द्रम्, अन्यान् आस्थानिकान् च दूरीकृत्य मन्त्रिणः संहारं कर्तुम् इच्छति । किन्तु मन्त्री रक्षितः भवति । सेनापतेः विरोधं कुर्वतः वसन्तस्य शूलारोपणम् आज्ञाप्यते । किन्तु शूलारोपणसमये अवगुण्ठनधारी कश्चित् तं रक्षति । नगररक्षकः वसन्तस्य परिवारजनानां विचारणां करोति ।

8

# आर्यः

## राजकुमारस्य अज्ञातं रहस्यम्

चित्रम् - गान्धि-अय्यः




नगररक्षकः तौ कशया ताडयति ।



सः ततः बालान् विचारयति ।







ग्रामीणाः विरोधं कुर्वन्ति । तदा सर्वे कशया ताडिताः भवन्ति ।







अलं तस्य नामग्रहणेन ।
स तु मृतः अस्ति ।
वयं शान्त्या यथा जीवेम तथा अनुग्रहं करोतु कृपया !


नगररक्षकः गृहाणां ज्वालनं दृष्ट्वा नितराम् आनन्दतुन्दिलः भवति ।
'यदा सर्वं भस्मसात् भविष्यति तदा शान्तिः प्राप्यते' इति वदति सः ।


मुनिः मन्दिरसमीपे तिष्ठति । जयनगराधिपतिना मेलितुम् इच्छति।
एतस्याः वृष्टितः रक्षणाय क्व गन्तव्यं मया ?


व्याघ्रि ! भवती अत्रैव प्रतीक्षां करोतु ।


जयानन्दः शुकद्वारा स्वस्य आगमनवार्तां प्रेषयति ।
मल्लिके ! गच्छ अधिपतिसमीपम्

अधिपतिः सुखदेवः शुकस्य ध्वनिं शृणोति ।

एषः मल्लिकायाः ध्वनिः । एषा स्वामिपादानां शुकः ।

श्रीमन् ! श्रीमन् !

आर्य ! आर्य !

सुखदेवः जयानन्दस्य स्वागताय वेगेन गच्छति ।

श्रीमन् ! अहं द्वारम् उद्घाटयामि..

आदौ भवान् शरीरं मार्जयतु सम्भाषणं ततः ..

महत्त्वपूर्णस्य उद्देशस्य निमित्तम् अत्र अहम् आगतः ।

मुनिः सुखदेवस्य शान्तिपुरस्य स्थितिविषये चर्चां कुरुतः ।

राजधानीतः आगताः वार्ताः नितरां चिन्ता-जनिकाः सन्ति वत्स

घोरा विपत् एषा । समग्रः राजपरिवारः अपाय-ग्रस्तः अस्ति !

जयानन्दः एकं सुवर्णहारं सुखदेवाय दर्शयति ।

शिशुः राजकुमारः मत्समीपे अस्ति । एतं सुवर्णहारं पश्यतु ।

अत्रत्ये पदके राजचिह्नं स्फुटतया दृश्यते । तस्मात् स्पष्टं यत् भवता प्राप्तः शिशुः राजकुमारः एव इति ।

सुवर्णहारः भवत्समीपे भवतु इति मदिच्छा ।

श्रीमन् । भवान् निश्चिन्तः भवतु । एतम् अहं रक्षिष्यामि । किन्तु...

एषः हारः कदापि शत्रूणाम् अधीनः न भवेत् । राजकुमारः अपि स्वस्य राजकुमारत्वं न जानातु नाम ।

तस्य रक्षणम् अहं करिष्यामि श्रीमन् ।

राजकुमाराय मया एषः हारः कदा प्रत्यर्पणीयः ? एषः मद्गृहे अस्ति इति सः कदा जानीयात् ?

योग्ये समये राज-कुमारः सुमेधाः स्वयम् आगत्य तं प्रार्थयिष्यते ।

अनुवर्तते

# इन्धनं संरक्ष्यताम्

पितामही पितामहश्च कदाचित् मासात्मकाय वासाय वीणायाः गृहम् आगतौ । पौत्र्याः शिरः प्रीत्या स्पृशन्ती पितामही अपृच्छत् - "कथं प्रचलति विरामकालयापनम् ?" इति ।

"अहो, नितराम् आनन्द-दायकम् ! सुप्रियया सह तिष्ठन्ती अहं परमानन्देन अस्मि । अम्ब ! मया पाककला अपि अभ्यस्ता अस्ति । पाकसमये इन्धनानिलस्य सञ्चयः कथं करणीयः इति मम मात्रा सुधामातुलान्या च अहं सम्यक् बोधिता अस्मि" इति सोत्साहम् अवदत् वीणा ।

"एवम् ! महतः सन्तोषस्य विषयः एषः" इति प्रीत्या अवदत् पितामही ।

वीणा आत्मना ज्ञातान् अंशान् तां श्रावितवती ।

सर्वं श्रुत्वा पितामही अवदत् - "एकः अंशः भवत्या न उक्तः । तम् अंशं गृहस्य सर्वे सदस्याः अपि अनुसर्तुम् अर्हन्ति" इति ।

"कोऽयम् अंशः ?" इति कुतूहलेन अपृच्छत् वीणा । तस्याः मातापितरौ अपि तस्य अंशस्य श्रवणे कुतूहलिनौ दृष्टौ ।

"बहुषु गृहेषु कश्चन क्रमः दृश्यते एषु दिनेषु । गृहसदस्याः युगपदेव भोजनार्थं न आगच्छन्ति । भवत्याः गृहे अपि अयमेव क्रमः दृश्यते । एकैकोऽपि स्वस्य आनुकूल्यस्य अनुगुणम् आगच्छति, खादति, गच्छति च । एतस्मात् अमूल्यस्य इन्धनस्य अपव्ययः भवति । पुनः पुनः आहारस्य उष्णीकरणात् तत्रत्याः पोषकांशाः नष्टाः भवन्ति । यदि गृहसदस्याः सर्वे युगपत् भोजनसमये उपस्थिताः भवेयुः तर्हि एषः अपव्ययः निवारितः स्यात् । गृहस्य सदस्येषु भावबन्धश्च वर्धेत" इति अवदत् पितामही ।

"योग्या सूचना एषा । भोजनसमये सर्वे यथा उपस्थिताः भवेयुः तथा कर्तुम् अद्यैव यत्नस्य आरम्भं करिष्यामि" इति अवदत् वीणायाः माता ।

"उत्तमः सङ्कल्पः एषः । यदि कश्चित् समये उपस्थातुं न शक्नुयात् तर्हि तस्मै आहारः 'हाट्केस्'नामके पात्रे संरक्षणीयः । तस्मात् पुनः तस्य उष्णीकरणस्य आवश्यकता न भवति, आहारस्य उष्णता च रक्षिता भवति" इति अवदत् पितामही ।

'उत्तमा सूचना एषा' इति भावितवन्तः वीणायाः गृहस्य सर्वे सदस्याः ।

## भवदर्थकं विज्ञानम्

# समुद्रतः लवणम्

'समुद्रस्य जलं किमर्थं लवणमयं भवति' इत्येतस्य उत्तररूपेण काचित् कथा श्रूयते - 'काचन महानौका लवणं नयन्ती वृष्टि-झञ्झावातादीनां कारणतः समुद्रे लीना जाता । तस्मात् समुद्रजलं लवणमयं जातम्' इति । एषा तु कथा । वस्तुस्थितिः अन्या अस्ति । समुद्राभिमुखं वहन्त्यः नद्यः शिलादीनाम् उपरि वहनसमये लवणांशं खनिजाद्यंशान् च आत्मना सह आनीय समुद्रे योजयन्ति । एवम् प्रभूततया सङ्गृहीतः लवणांशः समुद्रस्य लवणमयतां वर्धयति ।

सूर्यतापकारणतः समुद्रे जलं यदा बाष्पमयतां प्राप्नोति तदा लवणांशः समुद्रे एव तिष्ठति । तस्मात् समुद्रे लवणमयत्वं प्रवर्धते । समुद्रतः लवणं प्राप्तुम् इच्छवः समुद्रजलं लवणनिर्माणक्षेत्रं प्रति प्रवाहयन्ति - समुद्रस्य उद्गतिकाले । सूर्यतापकारणतः तस्मिन् क्षेत्रे जलं यदा शुष्यति तदा लवणं प्राप्यते । तत् सङ्गृह्य स्वच्छीकृत्य विक्रीयते । तदेव उच्यते 'प्राकृतिकं लवणम्' इति ।



## परिसरवैचित्र्यम्



# जलाभावेऽपि सस्यवृद्धिः

सस्यानां जीवनार्थं वर्धनार्थं च जलम् अत्यावश्यकम् इति वयं जानीमः एव । मरुभूमौ कानिचन सस्यानि प्रवृद्धानि दृश्यन्ते । तानि भवन्ति कण्टकमयानि । एतानि कण्टकसस्यानि कथं वा तत्र जीवधारणं कुर्वन्ति ? वृष्टिसम्भवः अपि तत्र न्यूनः एव । भूमितः अपि जलं न प्राप्यते । तथापि तानि जीवं धरन्ति कथम् ?

तानि सस्यानि पर्णबहुलानि । तेषां वृन्तभागः दृढः भवति, दीर्घकालं यावत् जलांश-धारणसमर्थः चापि । तस्य सस्यस्य मूलानि गभीरं स्थलं प्रति गच्छन्ति, विशाले प्रदेशे प्रसरन्ति च । यदा वृष्ट्यादितः जलं प्राप्यते तदा एतानि मूलानि अधिकाधिकतया जलं सङ्गृह्णन्ति । एतानि सस्यानि गृहे कुण्डे अपि वर्धयितुं शक्यानि अलङ्काराय । अल्पं जल-सेचनं प्राप्यापि जीवन्ति एतानि ।

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवन्तः जानन्ति किम् ?

### उरगकुलीयः महाकायः

पङ्कमयी भूमिः, अन्धकारमयः शान्तः कासारः, नद्यः, अरण्येषु उष्णप्रदेशेषु प्रवहन्त्यः निर्झर्यः इत्यादीनि मकराणाम् आवासस्थानानि । एते एव मकराः 'उरगकुलीयाः महाकायाः' इति निर्दिश्यन्ते ।

जगति त्रयोविंशतिः (२३) मकरजातयः एतावता अभिज्ञाताः सन्ति । समुद्रवासी लवणजलवासी वा मकरः मकरजातीयेषु एव अतिबृहत्तमः ।

एते विंशतिपादमिताः अपि भवन्ति क्वचित् । भारः भवति प्रायः टन्मितः । यदा एते पङ्कमय्यां भूमौ आतपसुखग्रहणाय तिष्ठन्तः मुखं विशालतया उद्घाटयन्ति तदा तेषां दंष्ट्राः दृष्टिगोचराः भवन्ति । एतादृशं रुद्ररमणीयं दृश्यं विरलतया एव दृश्यते ।



मकरः यद्यपि जले स्थले चापि वसति, तथापि आधिक्येन स्थितिः जले एव । जलसमीपे सञ्चरन्तः पक्षिणः, कूर्माः इत्यादयः एतस्य आहाराः । क्वचित् एव वन्यभल्लूकं, गोमहिषादीन् चापि गृह्णाति अपि ।

जले निमग्नः सः विंशत्यधिकनिमेषकालं यावत् तत्रैव स्थातुम् अपि अर्हति । भूमौ १४ कि.मी.वेगेन सञ्चारे समर्थः अस्ति सः ।

## अभिवर्ध्यतां ज्ञानशक्तिः

### भारतप्रवासम् अधिकृत्य..



१. गर्बानृत्यं द्रष्टव्यं चेत् किं नगरं प्रति गन्तव्यम् ?



२. 'जरावा'जातीयाः 'सेण्टिनेलेस्'जातीयाः च कस्मिन् प्रदेशे निवसन्ति ?



३. १९३० तमे वर्षे प्रवृत्तस्य लवण-सत्याग्रहस्थं कारणतः दक्षिणभारतस्थं किं नगरं प्रसिद्धं जातम् ?



४. अखण्डलोहेन निर्मितः दर्पणः कस्मिन् राज्ये प्राप्तुं शक्यः ?



५. किञ्चन राज्यं विहूपर्व आचरति । तस्य राज्यस्य नाम किम् ? तदङ्गपर्वाणि कानि ?

*(उत्तराणि ६६ तमे पृष्ठे)*

# चित्रशीर्षिकास्पर्धा



अधस्तनं चित्रद्वयं दृष्ट्वा परस्पर-सम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?



NARAYANA MURTY TATA



NARAYANA MURTY TATA

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते ।

पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

'फेब्रवरी' मासस्य चित्रशीर्षिकाप्रेषकः -

**कु. जागृति तिवारी**

C/o शिवपूजन यायावर, ४/६८, ऋषिनगर,
शुक्लगञ्ज, उन्नाव - २०९८६१

### पुरस्कृता शीर्षिका





क्रीडा न मोदो न, चिन्ताकुलेयम् ।
मित्रैः समेतः स्मेराननोऽयम् ।

## परिवर्ध्यतां ज्ञानम्

१. गुजरातं प्रति ।
२. अन्दमान-निकोबारद्वीपसमूहे ।
३. वेदारण्यम् ।
४. केरले अरन्मुलानगरे ।
५. अस्साम् । माघबिहू, कटीबिहू, बोहागबिहू च ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

